# मध्यकालिकः संस्कृतनाटकालोकः

लेखक

**रामजी उपाध्याय**
एम ए, डी फिल्, डी लिट्
मोनियर-प्रोफेसर, संस्कृत-विभागाध्यक्षश्च
सागर विश्वविद्यालय, सागर

प्रकाशक
**भारतीय-संस्कृति-संस्थानम्**
नारीबारी, इलाहाबाद

हरिजनोद्धारमहात्मने

"श्रीबलदेव चौबे" इति विश्रुतनाम्ने

सत्यानन्द-स्वामिने

ग्रामाद् ग्राम व्रजन् देवोऽसृजद् दृष्टि पराङ्मुखीम् ।
सत्यानन्द-स्वरूपाय तस्मै ग्रन्थ समर्प्यते ॥

# भूमिका

'मध्यकालिक संस्कृतनाटकालोक' इति ग्रन्थे ख्रीष्ट सवत्सरस्यानवम शताब्दं पञ्चदश शताब्द-पर्यन्तं सस्कृत रूपकाणामितिहासो विकास-क्रमेण विरचित। सदसद्विवेकाद् विरता प्रायशो वैदेशिका एव भारतीयविद्या-धौरेया, येषा परवर्तिपु सस्कृत-काव्येषु रूपकेषु वा किमपि श्रेष्ठतत्त्व न दृष्टम्। अन्यच्च तेषा विडम्बनं यत् ते भारतीयरुचि-प्रकर्षमेतेषु रूपकेषु प्रेक्षितु न पारयन्ति। न ते विचारयन्ति यदाराजरङ्कमाबालवृद्धमास्त्रीपुरुष लोकाना रञ्जनाय रूपक-सहस्र परवर्तियुगे रचितम्, प्रयोजितम्, नाट्यशास्त्राचार्यवर्यै समालोचितञ्च। एतावन्मात्रेणापि तदस्माकमवधान सादरमर्हति। वस्तुत सर्वं कविकर्म सोद्देश्य भवति। कवय सरस विधिना लोक प्रशिक्षित प्रातिभ किञ्चिन्नवनवोन्मेषं विचित्य नाटकादीनि रचयन्ति। आधुनिक ज्ञानलवदुर्विदग्धानामज्ञानविजृम्भितैर्विजल्पितोऽपि परवर्तिरूपकराशिर्नोपेक्षणीय। वस्तुतस्तु सनातन सत्यमेवोद्घाटित यशोभूषणेन मम्मटाचार्येण—

> काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
> सद्य परनिर्वृतये कान्तासम्मिततयोपदेशयुजे॥

नैतत् प्राचीनकाव्यमधिकृत्यैव सत्यम्, अपितु वैकालिक काव्य सद्य परनिर्वृतये, उपदेशयुजे च भवत्येव लोकसन्धारणाय लोके प्रेक्षणीय पठनीय रक्षणीयञ्च।

सत्यमेव महावृक्षाणामधो लघुवृक्षा न विलसन्ति। ते विशीर्यन्ते। किन्तु नैतदविज्ञात यल्लघुवृक्षैरपि काञ्चिद् विचित्रामेव शोभा जनयितु नागरका स्वभवनसमीपमेव तान् सवर्धयन्ति। तथैव कालिदासादीना नाटकानि यथास्थान विलसन्तु। तेषा प्रभाव-परिधे सुदूरमपि अन्यता मा भूमिर्यत्र नव्यानि च माध्यमिकानि च रूपकाणि जनमनोहरणाय यथापूर्वं विलसन्तु विकसन्तु च।

धर्मदर्शनविरहित साहित्यमय च लोककाव्य नाटक च ख्रीष्टाब्दात् प्रागेव बहु विलसितम्। तत् सर्व धमबुद्धीना विपदिग्धेन कटाक्षशरेण निपातितमृत विस्मृतमेव। साधु प्रोक्त सरेवेल महोदयेन—

It is quite possible that India had a well developed drama

even before the Greeks, though not much is known of this early period —The Theatre Handbook P. 245.

भारतीय नाटक-साहित्यस्य प्रथमपद एवोच्चतरं काव्यं विलसतीति वितथमुच्यते—With Bhavabhūti the line of great dramatists in Indian *literature comes to an end.* इति विण्टरनित्जमहाभागो ग्रहिलबुद्धीनां वैदेशिकालोचकानां सम्मतिमेव प्रवर्तयति। तेषां परम्परावरोधकानां वैदेशिकाना भारतीया-सन्ततिस्तानेवानुस्वनति यत् मध्यकाले, आधुनिक काले वा नास्ति नाटकोत्कर्षः।

अतः परमपि केचित् समालोचका वदन्ति यत् संस्कृतं तु मृतमेव। तेषा मतेन प्रायः सहस्रद्वयवर्षपूर्वं यदा प्रभृति प्राकृत-भाषा प्रचलिता तत एव संस्कृत-भाषायाः सामान्य-जनप्रयोज्यत्वं विनष्टम्। अत्रास्माकमुत्तरमधोविधं वर्तते—संस्कृतभाषामरणमनु भासः, कालिदास, भारविः, भवभूतिः, शङ्कराचार्यः, कल्हणः, श्रीहर्षः, जगन्नाथ इति बहवः प्रथितयशसो महाकवयो बभूवुः। किं नेदं सत्यं यत् जीवन्त्यामपि प्राकृतभाषायां तावदुच्चकोटिकः कश्चित् कविर्नैवाभवत् यावत् मृतेऽपि संस्कृते इमे प्रातःस्मरणीया महाकवयो बभूवुः। कीदृशमिदं संस्कृतस्य मरणं यदनुमरणमपि संस्कृतशवानुसरणं महाकवित्वं ददाति। तत्तु नान्यथा प्राप्यम्। भारतराष्ट्रस्य, तस्य साहित्यस्य संस्कृतेश्च द्वेषिणां मृषावाद एव संस्कृत-मरणवार्ता।

'मध्ययुगे विरचितानि नाटकानि सततमभिनीयन्ते स्म' इति तेषां प्रस्तावनासु सूत्रधारमुखेन मुखरितमेव। तथा हि पारिजातमञ्जर्याम्—

शारदादेव्याः सद्मनि सकलदिगन्तरोपगतानेकत्रैविद्य-सहृदय-कला-कोविद-रसिक-सुकवि-सङ्कुले विजयश्रीर्नाम नाटिका नाटयितव्या।

कर्णसुन्दर्याम्—

श्रीशान्त्युत्सवदेवगृहे भगवतो नाभेयस्य महामात्यसम्पत्कर-प्रवर्तिते यात्रामहोत्सवे समुत्सुकः सामन्तजनः प्रत्यग्रप्रयोगदर्शनाय।

तापसवत्सराजे—

किं तापसवत्सराजं पश्यन्ति सामाजिकाः।

अपरमपि किञ्चिद् वैशिष्ट्यं विद्यते मध्यकालिकनाटकानाम्। प्राचीन-रूपकराशौ ईहामृग-वीथी-समवकाराणां रूपकाणां श्रीगदित-प्रेक्षणकादीनामु-

रूपकाणां निदर्शनं क्वचिदेव लक्ष्यते। तेषां प्रथमं स्पष्टमुदाहरणं बहुविधं मध्यकालिके साहित्ये उल्लसति।

मध्ययुगस्य रूपकाणां रचयितारो राजानः, महापण्डिताः, अमात्याः, आचार्याः, महाविदुष्यश्चासन्, येषां स्वात्मनि कश्चिद्विशेष आसीत्। तथा हि—

सांस्कृतिकाचार्याः—वेदान्तदेशिक-वेङ्कटनाथ, रामभद्रमुनि, शीलाङ्क, रामचन्द्रगुणचन्द्रौ, मेघप्रभाचार्य, बालचन्द्रसूरि, जयसिंहसूरि, पूर्णसरस्वती, ब्रह्मसूरि, गोविन्दानन्द सरस्वती, नेमिनाथ।

दर्शनाचार्याः—जयन्तभट्ट, पूर्णसरस्वती

महाविदुष्य—विज्जका

राजानः—मायुराज, कुलशेखर-रविवर्मा, प्रह्लादनदेव, विग्रहराजदेव, सिंहभूपाल, विरूपाक्ष।

राजगुरु—राजशेखर।

राजामात्याः—वत्सराज, महापात्रो विश्वनाथ, विद्यापति।

अतएव तेषां कृतयो भ्राजन्ते। सुप्रतिष्ठिता इमे महात्मानो यत्किञ्चिद् विरचयन्ति स्म, न तदस्थायिमहत्त्वमागितयस वैशद्य-प्रकरणेन।

प्राचीनयुगस्यान्तिमसम्राट् हर्षवर्धनोऽन्तिममहाकविश्च भवभूतिरभूवत्। पश्चाद् मध्ययुगस्य विस्तारो ख्रीष्टाब्दस्य नवमशताब्दादारभ्य मुगलशासनारम्भं यावत् पञ्चदशशताब्द-पर्यन्तमासीत्। आ मुगलकालादद्यावधि आधुनिकं युगं प्रवर्तते। अनेन कालविभाजनेन मया संस्कृतनाटकानामितिहासस्त्रिभागशो विरचितः।

सागर विश्वविद्यालये
रामनवमी २०३७ वि० सं०

रामजी उपाध्याय

# विषयानुक्रमणिका

———

# हनुमन्नाटकम्

लोकनाटकस्यैकानुपमा कृतिर्हनुमन्नाटकम् ८०० ख्रीष्टाब्दमभित पुस्तकरूपेण प्रतिष्ठितमासीदिति कल्प्यते, यतो हि नामास्मिन्नाटके भवभूते प्रभावो परिलक्ष्यते तथा दशरूपकस्यावलोकटीकायामस्योदाहरणानि नाम्ना गृहीतानि ।[१] भवभूति ७०० ख्रीष्टाब्दमभित प्रादुर्बभूव, अवलोकटीका च १००० ख्रीष्टाब्दमभित प्रणीता । तयोर्मध्ये प्रणीतमिदम् । अत एव भोजप्रबन्धादौ हनुमन्नाटकस्य कालविषये किंवदन्तीना निस्सारता प्रतिभाति ।

पश्चात्तेभ्योऽपि रामविषयक-श्रेष्ठनाटकेभ्य उत्तमश्लोका नाटकेऽस्मिन् बहुश समावेशिता इत्यनेन विधिनास्य महानाटकत्व प्रसाधितम् ।[२] अपरथाऽपीद नाटक रामस्य समग्रचरित्रस्य वर्णनेन किञ्चिद् वृहत्तर स्वरूप विदधन्महानाटक नाम सार्थक विधत्ते ।[३]

हनुमत प्रकर्ष-प्रधानत्वेनेद नाटक हनुमन्नाटकमिति प्रसिद्धम् । 'सुभद्रानाटिका' 'कुवलयावली' प्रभृतीनि रूपकाणीतराण्यपि नायकनाम्ना सज्ञितानि । 'हनुमन्नाटक'—नाम्नास्य रूपकस्य दशाङ्कात्मक वङ्गीय सस्करण, दामोदरमिश्रेण सम्पादित च पश्चिमभारते प्रचलित चतुर्दशाङ्कसवलित महानाटक-नाम्नेति सस्करणद्वय विद्यते । केचन पुनरिद नाटक 'छायानाटकम्' इत्यपि वदन्ति यतो हि नामास्य दशम द्वादशयोरङ्कयो सीतारामौ मायारूपौ वर्णितौ ।

---

१ हनुमान् स्वयमेवास्य नाटकस्य प्रणेतेति किंवदन्ती रूपकस्यास्य लोकनाटकत्व प्रसाधयति ।

२ सर्ववृत्तिविनिष्पन्न सर्वलक्षणसयुतम् ।
समग्र तत्प्रतिनिधि महानाटकमुच्यते । भावप्रकाशने
एतदेव यदा सर्व पताकास्थानकैर्युतम् ।
अङ्कैश्च दशभिर्धीरा महानाटकमूचिरे ॥ साहित्यदर्पणे ६ २२३

३ नाटकेषु नायकस्य नैकचारितानामितिहासवद्वर्णन योरपीय-रूपकेष्वपि वर्तते । तथा हि टामस हार्डी महोदयस्य Dynasts इति Epic Drama भागत्रये विभक्त विरच्यापि नैपोलियनस्य चरित नवाङ्कै १३० दृश्यैश्च प्रस्तौति ।

अस्मिन्नाटके रङ्गमञ्चीयाभिनवा शैली दृश्यते, यत्र कोऽपि निवेदक एवोपस्थाय संवादविहीनानि कथ्यानि क्वचिन्निवेदयति। एवंविधानि रूपकाणि महाराष्ट्रेषु प्रचलितानि 'निवेदन' नाम्नाधुनापि व्यवहृतानि। अन्यत्र संवादा अपि समुपलभ्यन्ते। यथार्थमेवाह विण्टरनित्समहोदयो यदियं कृतिर्महाकाव्यनाटकयोर्मध्ये तिष्ठति, यत्र महाकाव्योचितानि आख्यानानि नाट्योचिताश्च संवादा ग्रथितानि।

हनुमन्नाटकेऽनेकत्र रामायणस्य कथावस्तु परिवर्त्य कतिपये विशेषाः समाकलिताः। सीतास्वयंवरकाले रावणस्य पुरोहितो जनकमुपगम्य रावणाय स्वतनयां सम्प्रदातुं प्रास्तौद् रामं च सीता-विवाहान्न्यवारयत्। यदा जनकराजो धनुर्धिज्यं कर्तुं स्वसमयं न्यवेदयत् तदा पुरोधाः शिवचापं रावणो न्यक्कर्तुं नैच्छदिति कैतवं पुरश्चकार। कथाभागोऽयमन्यथाकृत्यात्र नाटके निवेशितः। जामदग्न्यस्य समागमे संवादादयोऽपि नैव रामायण-परम्परां सर्वभावेन समनुसरन्ति। सीताया रामेण सम्भोगवर्णनमपि न तथा चरित्रगतमौदार्यमावहति यथा वाल्मीकिधारायामौचित्यं प्रख्यापयेत्। मेघनादेन कृतो मायासीतायाः शिरश्छेदो रामस्य, रावणेन कृतश्च रामस्य शिरश्छेदः सीताया मूर्च्छाहेतू अभवताम्। मायारामेण मायारावणशिरश्छेदान् पश्यन्ती सीता मायाराममाश्लेष्टुमुद्यताभूत्, तदा स पलायितः इत्यादयः कथापरिवर्त्ता ग्रन्थत एवावसेयाः। रणे मृतः स्वर्गं गच्छेयं सीतां वा प्रत्यावर्त्तयेयमिति रावणेन पृष्टा मन्दोदरी क्षत्रियां मामेव युद्धाय देवोऽनुजानातु इति यदुदाजहार तत् कामपि नवां विच्छित्तिमातनोति।

हनूमतो महामहिमचरित्रं तावन्मनो हरति—

> पीतो नाम्बुनिधिर्न कौणपपुरी निष्पिष्य चूर्णीकृता
> नानीतानि शिरांसि राक्षस-पतेर्नानायि सीता मया।
> आश्लेषार्पण-पारितोषिकमहं नार्हामि वार्ताहरो
> जल्पन्नित्यनिलात्मजः स जयति व्रीडा-जडो राघवे॥ ६·३६

अयमेव महिमा येन नाटकस्य नाम-सार्थक्यम्। रचयितुरस्य काव्यकौशलं रावणानुभावकलनेऽपि सहृदयानावर्जयति—

> प्रतापं संसोढुं रविरपि दशास्यस्य न विभु—
> र्निमज्जत्युन्मज्जत्यपरजलधौ पूर्व-जलधौ।
> हरिः शेते वार्धौ, निवसति हिमाद्रौ पुरहरो
> विरञ्चिः किञ्चापि स्वजनि-कमलं मुञ्चति न वा॥

रविसहिता देवचतुष्टयी विभीषापराधीना कुर्वाणो रावणो येन समूलघातं हत, तस्य रामचन्द्रस्य सर्वातिशायिनं महिमानं गातुकाम एव कविस्तथा वर्णयाबभूव। रसनिर्वाहनैपुण नैव जहाति कविवाचम्। चक्रवाक्या रौद्रकरुणाभासयोश्चित्र पुनरेकमत्रोदाह्रियते—

एकेनाक्ष्णा प्रविततरुषा वीक्षते व्योमसंस्थं
भानोर्बिम्बं, सजलसुलितेनापरेणात्मकान्तम्।
अह्नश्छेदे दयित-विरहाशङ्किनी चक्रवाकी
द्वौ सकीर्णौ विरचयति रसौ रौद्र-कारुण्य सक्तौ॥ १२ १७

अलकारेषु सुतरा निबद्धेयमा कस्य न मनो द्रावयति विप्रलम्भ रसस्यन्द विकिरती समुच्चय चाविष्कुर्वती—

चन्द्रश्चण्डकरायते मृदुगतिर्वातोऽपि वज्रायते
माल्य सूचिकुलायते मलयजालेप स्फुलिङ्गायते।
रात्रि कल्पशतायते विधिवशात् प्राणोऽपि भारायते
हा हन्त प्रमदावियोगसमय सहारकालायते॥ ५ २६

कथभूतो राजाभिमतो नाट्यकृत —

उत्खातान् प्रतिरोपयन् कुसुमितांश्चिन्वँल्लघून् वर्धयन्
क्षुद्रान् कण्टकिनो बहिर्निरसयन् विश्लेषयन् सहतान्।
अत्युच्चान् नमयन् नताश्च शनकैरुन्नामयन् भूतले
मालाकार इव प्रयोगचतुरो राजा चिर नन्दति॥ ६ ३८

इत्येव हनुमन्नाटकस्य स्थिता कीर्ति समस्त मध्यकालकविवृत्त प्रतिनिधत्ते, यया समावर्जितो महाकवि श्रीतुलसीदासो बहुशस्तद्भावाननुगृह्य रसप्रचुरान् प्रसङ्गान् निबध्नाति स्म।

## कौमुदीमहोत्सवम्

कौमुदीमहोत्सव नाटकस्य रचयित्री कापि स्त्री बभूवेति निश्चितम्। प्रयागस्थे भारती-भवन-पुस्तकालये नाटकस्य हस्तलेखस्य भूमिकाया " कया निबद्ध नाटकम्" इत्युपलभ्यते यत्र नामांशेन त्रुटितेन विभक्त्यशेन चोपलब्धेन स्त्रीकर्तृकमेतदिति 'का' इत्यक्षरान्त च तन्नामेति निश्चीयते। विज्जका तत्कर्त्रीति केचन किशोरिकेति चापरे वदन्ति। नवम्या शताब्द्या शैलाङ्करचिता विबुधानन्द-प्रणयकथा कौमुदीमहोत्सवमुपजीवतीति नाटकस्यास्य रचना ८०० ख्रीष्टाब्दमभित सम्भाव्यते।

कथावस्तुनि वीरोचिताः शृङ्गारोचिताश्च सन्दर्भाः सहृदयानावर्जयन्ति। पाटलिपुत्रस्य नृपतिः सुन्दरवर्मा कल्याणवर्मणा सपुत्रोऽपि चण्डसेनं क्रूरकर्माणं पुत्रीचकार। कृताभिसन्धिश्चण्डसेनो लिच्छविभिर्मगधानाक्रमयामास। सुन्दरवर्मा रणे हतो लिच्छवयोऽपि पराजिताः। राजकुमारः कल्याणवर्मा सपरिजनः पाटलिपुत्रान्निरवसत्। तस्य धात्री कानने हस्ति-गर्जनभीता सार्थाद् भ्रष्टा तापसान् शरणं जगाम। कुलपतिना समादिष्टः स व्याधकिष्किन्धदुर्गेऽवसत्। राजमन्त्री मन्त्रगुप्तश्च पाटलिपुत्रे राजकुमाराय पुना राज्यमर्पयितुं प्रायतत।

कदाचित् कल्याणवर्मा स्वप्नदृष्टां राज्ञः कीर्तिसेनस्य कन्यां कीर्तिमती नाम सिद्धायतनात् प्रत्यागच्छन्तीमदर्शत्। गतां तां राजकुमारः प्रेमवशंवदश्चिन्तयामास। राजकुमार्यपि तत्प्रेमाकुला तच्चित्रं निर्माय नातिदूरं विससर्ज। तच्च चित्रं सा परिव्राजिका लेभे या पूर्वं कल्याण-वर्मणो धात्री आसीत्। तत्र चित्रपटे धात्री सालिखत्।

> शौनकमिव बन्धुमती कुमारमविमारकं कुरङ्गीव।
> अर्हति कीर्तिमतीयं कान्तं कल्याणवर्माणम्॥

विदूषकश्च तथालेखान्वितं तच्चित्रं कल्याणवर्मणेऽर्पितवान्। तत्र चासौ कीर्तिमत्याश्चित्रं स्वप्रतिकृतिसविधे निर्मितवान्।

अथ पाटलिपुत्रे राज्यविप्लवः प्रवृत्तः। सुन्दरवर्मणो हन्ता चण्डसेनः प्रत्यन्तपालान् विजेतुं वहिर्जगाम। अत्रान्तरे कल्याणवर्मा राजधानीमाहूतः। चण्डसेने विरक्तीकृताः प्रजाः कल्याणवर्माणं प्रत्यनुरक्ता आसन्। स च चण्डसेनं निहत्य राज्ये समभिषिक्तः। अन्ततः कल्याणवर्मा कीर्तिमत्या विरहेण सन्तप्तमेव चिन्तयन् प्रमदवने विदूषकेण सह प्रथमसमागमस्य वृत्तमवर्णयत्।

> पातुं पद्मसुगन्धि लोलनयनं रोमाञ्चितं गण्डयो-
> र्यावद् विद्रुम-पाटलाधरपुटं वक्त्रं मयोन्नामितम्।
> वैलक्ष्य-प्रतिषेध-विक्लव-गिरा तन्व्या तया मुग्धया
> पश्चात् ताम्ररुचा करेण मम तु प्रच्छादिते लोचने॥ ५.२६

नातिदूरे वृक्षान्तरे स्थिता कीर्तिमती तत्सर्वं श्रुतवती। तस्याः सखी निपुणिका तच्चित्रं तयोर्मध्येऽक्षिपत्। चित्रागमनकारणमनुसन्धातुं गतोऽसौ कल्याणवर्मा कीर्तिमतीं प्राप्तवान्।

पुरातनकवीनां प्रभावाधीनपि कवयित्री प्रत्यग्रां कामपि चारुतां तत्र-तत्र वितनोति काव्यनैपुणस्य। यथा च बाल्यवर्णने प्रतिभा खेलति, यौवनं च धावति तथोदाह्रियते—

यो द्वौ शैशव पुष्टि-भेद-विशदौ रेखातपत्राङ्कितौ
क्षोणीचङ्क्रमणे मदङ्गुलिमुखं याभ्या समालिङ्गितम् ।
यद्द्ये यावपि कारितौ गुरुजने मात्रा बलादञ्जलिं
तौ हस्तावुरगेन्द्र भोग सदृश प्रौढ-प्रमाणौ कथम् ॥ २ ६

यथा वा रूपकालकार-योजना—

नाभी-वापी-प्रविष्ट स्तनशिखरगतो रोमरेखापदेन
प्रत्युत्पन्नप्रताप स्फुरदधर मणि-व्याज—नीराजनेन ।
लब्धो लीलाकटाक्षैर्मनसिज कलभो वर्तते दुर्निवारो
देव्या लब्धप्रसाद कल मणि-रशना डिण्डिमारोहणेन ॥ ५ २२

## मायुराजस्य नाटके

उदात्तराघवस्य तापसवत्सराजस्य च नाटकयो प्रणेतार मायुराज राजशेखर प्राशसत्—

मायुराजसमो जज्ञे नान्य कलचुरि कवि
उदन्वत समुत्तस्थु कति वा तुहिनाशव ॥

सोऽय मायुराजोऽनङ्गहर्षापरनामासीत्, पिता चास्य राजा नरेन्द्रवर्धन । कालञ्जरस्था कलचुरिशाखामय समलचकार, इति मिराशिमहोदयाना मतम् । कदाय प्रादुरभूदिति न यथावन्निश्चेतु शक्यम् । नवमशताब्द्या मध्ये आनन्दवर्धनस्तापसवत्सराज चर्चितवान् । भवभूते कृतीश्चायमुपजीवतीति । नवमशताब्द्या प्रारम्भे क्वचित् मायुराज आसीदित्यनुमीयते । सहृदय-मन्योऽमो स्वमेवमवर्णयत्—

सद्वृत्तानुगतो गतो गुणवतामाराधनेऽनुक्षण
कर्तुं वाञ्छति सर्वदा प्रणयिना प्राणैरपि प्रीणनम् ।
मात्सर्येण विनाकृत परकृती शृण्वन् सहृत्पुण्यकै-
रानन्दाश्रु जलप्लवाप्लुतमुखो रोमाञ्च पीना तनूम् ॥

## उदात्तराघवम

उदात्तराघव तावदभिनवगुप्त-कुन्तक भोज-हेमचन्द्रप्रमुखैराचार्यै ससम्मानमुद्धृतमिति मायुराजस्य रामकथाविषय गौरवमुद्घाटयति । दशरूपके धनञ्जयस्तु बहुशस्तदशानुदाहरत् । तत्र कथावस्तु इत्थ सक्षेपित राजते—

रामो मूर्ध्नि निधाय काननमगान्मालामिवाज्ञां गुरो—
स्तद्भक्त्या भरतेन राज्यमखिलं मात्रा सहैवोज्झितम् ।
तौ सुग्रीवविभीषणावनुगतौ नीतौ परां सम्पदं
प्रोद्वृत्ता दशकन्धरप्रभृतयो ध्वस्ताः समस्ता द्विषः ॥

## तापसवत्सराजम्

तापसवत्सराजमिति कृतिर्मायुराजस्योदयनकथाकोविदत्वं सूचयति यत्रासौ यौगन्धरायणस्य मन्त्रगुप्ति-नैपुणीं वासवदत्तायास्तपोनिष्ठां पद्मावत्याः प्रणयपरवशतां प्रद्योतस्य च राजनीतिकौशलमवर्णयत् । आरुणेः पराभवाय वत्सराजोदयनस्यावरोधेऽवरोधं निराकर्तुं महामंत्री यौगन्धरायणोऽन्यैः सह संमन्त्र्य प्रद्योतं वासवदत्तां च संगमयांचकार । महासेनो हि प्रद्योत आत्मजां वासवदत्तां पत्रेण निर्दिशति ।

अपि जीवितसंशयेन वत्से,
हृदयात् स्त्रीसुलभं विहाय मोहम् ।
उपमानपदं पतिव्रतानां,
चरितैर्यासि यथा तथा विधेहि ॥

अन्ते च संन्यासिनीवेषा वासवदत्ता तापसी च पद्मावती उदयनेन प्राप्ते इति अर्थकामौ पुरुषार्थौ प्राप्य राजा सफलोऽभवत् ।

तापसवत्सराजे मायुराजो विशिष्यते, यत्र भासस्य स्वप्नवासवदत्तात्मकं कथावस्तु समधिकं संशोभते । पारावती-व्यापारमुखेन पद्मावत्याः प्रणयलीलां निबन्धानः कविर्जयति—

किंचित्-कुञ्चित-चञ्चु-चुम्बन-सुख-स्फारीभवल्लोचना
स्वप्रेमोचित-चारु-चाटुकरणैश्चेतोऽर्पयन्ती मुहुः ।
कूजन्ती वितरैक-पक्षति-पुटेनालिङ्ग्य लीलालसं
धन्यं कान्तमुपान्तवर्तिनमियं पारावती चुम्बति ॥ ३.१३ ॥

सौगताचारस्तुतिव्याजेन निन्दां प्रस्तुवन् हास्यमेव पुष्णाति लामकायनो भिक्षुः —

पूर्वाह्णे कृतभोजन-व्यतिकरान्नित्यैव नीरोगता
कण्डूतिस्त्वकचादपैति शिरसः स्नानं यदा रोचते ।
जात्याचार-कदर्थना-विरहितं ब्राह्मण्यमात्मेच्छया
धूर्तैः सत्त्वहिताय कैरपि कृतं साधु व्रतं सौगतम् ॥ ३.३

श्लिष्टोपमा द्वारेण नाटकीय कथावस्तु सूचयन् मायुराज कामपि नवा काव्य प्रतिभामुन्मेषयति—

आदौ मान-परिग्रहेण गुरुणा दूरं समारोपिता
पश्चात्ताप भरेण तानवकृता नीता पर लाघवम् ।
उत्सङ्गान्तरवर्तिनीमनुगमात् सम्पिण्डिताङ्गीमिमां
सर्वाङ्ग-प्रणया प्रियामिव तवच्छाया समालम्बते ॥ ३ १७

## अनर्घराघवम्

वर्धमानस्य तनूजन्मा मुरारि सप्ताङ्कविस्तर नाटकमनर्घराघव नाम प्रणीय बालवाल्मीकिरिति नामापि लेभे। रामकथाया विकाममुद्दिश्य कृतेन विचारेणाय भवभूति-राजशेखरयोर्मध्ये क्वापि विराजत इति प्रतीयते । तथा च प्रायेण ८७५ खीष्टाब्दे स्थितिरित्यपि निश्चीयते, भवभूतिर्हि अष्टमे खीष्टाब्दे राजशेखरश्च नवमे खीष्टाब्दे बभूवतुरिति निश्चितप्रायम्। अनर्घराघस्य स्थलेषु महिष्मती नगरी कलचुरि-राजश्चोल्लिखिताविति स तदाश्रितो बभूवेत्यपि अनुमीयते।

कथानुसारेण वसिष्ठो वामदेवेन दशरथमादिशद्—न तव द्वाराद् याचको विमुखो गच्छेदिति । तदनु समागत्य विश्वामित्रो यज्ञरक्षायै रामलक्ष्मणौ स्वमाश्रममनयत्। वाली रावण-मैत्र्य चकारेति जाम्बवान् नामहृत । स च सुग्रीवं हनुमन्त चान्वमन्यन बालिन विहाय ऋष्यमूक गन्तुम्। वालिन दुर्बल वीक्ष्य रावण खर दूषण त्रिशिरस च सेनाबलितान् कृत्वा समुद्रस्योत्तरस्या दिशि स्थापयामास। तत् एव ताटका मनुष्यमण्डले विहर्तुं विश्वामित्राश्रमं समागता। तत्कृतान् प्रत्यूहान् वारयितु मुनिराहूतवान् रामम्, दिव्यानि चास्त्राणि तस्मै प्रादात् । निशीथे सुबाहु-मारीचाभ्या सहागता ताटका परिचित्य मुनि तान् हन्तु राममादिशत्। मारीचाद्ते रामो हतवान् तौ मातापुत्रौ।

विश्वामित्रो रामलक्ष्मणौ जनकपुरमनयत् जनकश्च रामं सीतायोग्यं वर मन्वानोऽपि तस्य धनुष सज्यीकरण प्रति सदिग्ध आसीत् । अत्रान्तरे रावणस्य पुरोधा शौष्कल आगत्य रावणाय सीता जनकं ययाचे, शतानन्दाद् धनु सज्य कर्तुं जनकस्य प्रतिज्ञा श्रुत्वा तेनोक्तं माहेश्वरा दशाननो न शिवचापमवमन्तुमुत्सहते स्म इति। स यावदस्त्रप्रयोगे व्यापृत एवासीत् तावदेव रामो-

धनुर्वभञ्ज। सीरध्वजस्य कन्ये सीतोर्मिले क्रमेण रामलक्ष्मणाभ्यां दत्ते। रावणदूतो जनकं सीरध्वजं तर्जितवान्—

"पौलस्त्य-हस्तवर्तिन्या सीतया तु भविष्यते।"

रामं प्रति चाकथयत्—

"अरे राम त्वं, मा जनकपति-पुत्रीमुपयथाः ॥"

तदनु जाम्बवान् शवरीं नियुक्तवान्—भरतं प्रति कैकेय्या प्रेषिताया निदाघदाहेन मृताया मन्थराया देहं प्रविश्य कैकेय्याः कूटपत्रं मिथिलायां प्रोषिताय दशरथाय समर्पयेति। तत्रैव दशरथो रामं राज्येऽभिषेक्तुं स्वयं च वनाय प्रस्थातुमियेष, किन्तु कूटपत्रेण सीतया लक्ष्मणेन च सार्धं रामं चतुर्दश वर्षाणि वने प्रवासयितुं भरतं चाभिषेक्तुं विवशीकृतः। मन्थरायाः शरीरं विहाय शवरी हनूमता रक्षितं स्वशरीरं प्रविश्य शृङ्गवेरपुरे यथावत् स्थितिं लेभे। शृङ्गवेर-पुर एव गङ्गां तीर्त्वा रामचन्द्रश्चित्रकूटं प्राप्तवान्। भरतश्चित्रकूटं गत्वा कूटपत्रं प्रति कैकेयी निर्दोषां न्यवेदयत्, राज्यं स्वीकर्तुं च रामं प्रार्थयत, परन्तु रामः प्रवासं पितुरादेशमेवामन्यत। भरतोऽपि रामस्य पादुके प्रतिष्ठाप्य नन्दिग्रामे वसन् न्यासमिव कोसलराज्यमरक्षत्।

शेषपरिशीलनेन कथायोजनायां न कश्चनावापश्चमत्कारपदवीमारोहति। रामो वालिनं द्वन्द्वयुद्धे परास्यन्न तु तरुतिरोहितवपुरनार्यमाचचारेत्यपि किंचित् किंचिदावर्जयति सहृदयानां मनांसि। दशकण्ठं निहत्य सीतामग्नौ परीक्ष्य रामः पुष्पकेण प्रत्याजगामायोध्यामितिविदितचर एव वृतान्तः। मध्यमार्गे भौगोलिक स्थानानां वर्णने नूतनता प्रतिभाति। मुरारिर्विश्वामित्रकृतां प्रार्थनामारभ्यान्ते रामराज्याभिषेकान्तां कथामनर्घराघवेऽवर्णयत्।

मुरारी राममुखान्नाटकान्ते काव्यालोकस्य लक्षणं व्याख्यातवान्—

"न शब्दब्रह्मोत्थं परिमलमनाघ्राय च जनः
कवीनां गम्भीरे वचसि गुणदोषौ रचयतु ॥" ७ १५१

इत्यसौ समीक्षकान् भर्त्सयत्येव। किन्तु शब्दब्रह्मवाद एव न कैवल्येन काव्यनिकषत्वमादधाति। तत्कृतेऽर्थगौरवमपेक्ष्यते, न केवला पदयोजना-चातुरी, यथा केचन निर्दिशन्ति—

मुरारिपदचिन्तायां भवभूतेस्तु का कथा।
भवभूतिं परित्यज्य मुरारिमुररीकुरु ॥ इति ॥

अथ पदचिन्तापरत्वमेव लक्ष्यते, न रसनिष्पत्ति-प्रावीण्यम् । अत एवेदमप्याहु —

मुरारिपदचिन्ता चेत् तदा माघे मतिं कुरु ।

अस्ति मुरारेर्माघस्य शब्दकोश पाण्डित्य महित शक्तिश्चापूर्वा राघवस्यानर्घामनघां च कथां परिवर्त्य योजयितुम्, किन्तु नैतावतैवामौ भवभूतिं वा माघं वोभौ वा प्रतियोक्तुं क्षमते । भवभूतेरछायैव क्वचित् कदाचित् केषाचिन्मनो हरेत्—

स्फुरति जडता, बाष्पायेते दृशौ, गलति स्मृति—
मयि रसतया शोको भावशिवरेण विपद्यते ॥ ५ २२

इत्यहो अनुभावमुखेन स्थायिभावस्य रसात्मको विपाक एव काऽध्यत्व नीयमानो विलोक्यते ।

नात्र सन्देहो यत्कवियौवनस्य रामणीयक प्रत्यग्रयैव तूलिकया चित्रयाचकार, किन्तु नाटकस्य विस्तारे ईदृशान्येवाङ्गप्रयनानि नाट्यकौशलं प्रवन्धपाटवं च तिरयन्ति । प्रमदा प्रति लालायमाना मुरारेर्लीला सर्वत्र प्रसृता प्रतिभान्ति । यथा

पौलोमी-कुच-पत्रभङ्ग-रचना-चातुर्यमत्यापित ।

तथापि सन्ति तथाभूतानि काव्य-बन्ध-व्यतिकर-चेष्टितानि यथा वशंवदयन्ति रसिकाना चेतांसि—

अभेदेनोपास्ते कुमुदमुदरे वा स्थितवतो
विपक्षादम्भोजादुपगतवतो वा मधुलिह ।
अपर्याप्त कोऽपि स्व-पर-परिचर्या-परिचय
प्रबन्ध साधूनामयमनभिसन्धान-मधुर ॥ ६ ६

अतिरञ्जनामनुरीकृत्य सूक्ष्मेक्षिकया निरीक्षितश्चेन्मुरारिस्तर्हि भवभूतेर्नित्य माघस्य पदसौष्ठवमुरीकृत्यापि कामपि नवामभिख्यां पुष्णाति ।

## आगमडम्बरम्

जयन्तभट्टस्यागमडम्बर पर्मतनाटकमपि निगद्यते । एतद्द्वारेण जयन्तो जयन्त इव चार्वाकेषु बौद्धेषु जैनेषु मीमांसकेषु शैवनैयायिकेषु पञ्च-

रात्रागमेषु हीनतरशैवेषु नीलाम्बरजैनेषु च चञ्चुप्रहारान् कृत्वा तान् निरावरणांश्चकार। अभिनयोचित—संघटनमिदं रङ्गमञ्चमवतारयितुं जयन्तशिष्याः सूत्रधारं निवेदितवन्त इति प्रस्तावनातोऽवधार्यते। १९६४ ई० वर्षे डा० राघवन्-महोदयो मद्रासनाट्यसंघेनैनत् प्रयोजितवान्।

काश्मीरा मूर्धन्यानां विपश्चितां रससिद्धानां कवीनां कोविदानां शास्त्रकृतां च प्रभवा अभूवन्निति को न वेद। अन्यासां ज्ञानशाखानामिव रूपकाणामपि प्रभूतं वाङ्मयं तत्र निर्मितं भवेदिति अनुमापि प्रत्यक्षायते किन्तु जयन्तभट्टस्यैनां कृतिं विहाय न किमपि काश्मीरीयं रूपकमद्ययावदुपलब्धम्।

न्यायमञ्जरीं पुरस्कृत्य खलु जयन्तभट्टो महीयसीं समज्ञां लब्धवान्। अनेन ग्रन्थेनासौ सर्वान् न्यायेतर-सिद्धान्तानपाकृत्य गौतमीयमेव मतं प्रत्यपादयत्। अतोऽपि प्रागसौ न्यायकलिकामुन्मील्य प्रमाणादीनां षोडशानामक्षपादीयानां तत्त्वानां सुरभिदलैः शिष्यपरम्परामवाकिरत्। गौतमसूत्राणां व्याख्यामभिपल्लवयन् सातिशयं विशदं च शास्त्रानुरागमाविर्भावयन्नेष न्यायपल्लवं नाम ग्रन्थं व्यरचयत्। सर्वातिशायिनीं न्यायराद्धान्तानुकूल्यमावहन्तीं कैशोर एवाष्टाध्यायीवृत्तिं कृतपूर्वी किलायं नववृत्तिकारोपाधिं जग्राह। अध्यापनैकरसविश्रान्तसंविदोऽस्य शिष्याणां विपुलता व्याप्नोत् काश्मीरान् भारतवर्षं च। अयं हि साङ्गवेदानां शास्त्राणां च दीपज्ञप्रकाण्डमभवत्। एतदप्यस्य महिमानं तनोति, यदयमाथर्वणीं श्रुतिमग्रगण्यतामनयत्। नैयायिकतल्लजः सन्नप्यसौ वैदिकः शैवोपासनापरश्चासीत्।

गोत्रेण भारद्वाजो वर्णेन ब्राह्मणोऽसौ विद्यायोनिवंशयोरेकतानतां बिभर्ति। अस्य पूर्वपुरुषा गौडेभ्यः काश्मीरेषु दार्वाभिसारीमावसन्। तेषामन्यतमः पण्डितमतल्लिका शक्तिस्वामी मुक्तापीडस्य महाराजस्य मन्त्रित्वमलंचकार। तद्वंश्यः कल्याणस्वामी योगशास्त्रनिष्णातो विमलमतिर्जयन्तभट्टस्य पितामहोऽभवत्। राज्ञः शङ्करवर्मणो धर्ममन्त्रित्वं भजन् जयन्तो राजकोपभाजनतां गतः कारां निषेवमाण एव न्यायमञ्जरी विरचितवान्। अस्य तनुजन्मा शिष्यश्चाभिनन्दो यौवन एव 'कादम्बरी-कथासारं' नाम ग्रन्थं विरच्य ख्यातिं लब्धवान्।

राजा शङ्करवर्मा ८८३ ख्रीष्टाब्दतः ९०२ पर्यन्तं राजासीदिति जयन्तभट्टस्य प्रतिभोन्मेषकालो नवम्याः शताब्द्याः परभाग एव निश्चीयते। नाटकेऽत्र स्वानुभूतमेव स्नातकस्य स्वरूपमुपस्थापितम्—

स्वाध्याय पठितो यथाविधि पराभृष्टानि चाङ्गानि षड्
मीमांसापि निरूपितेति विहित कर्म द्विजन्मोचितम् ।
नित्याघूतकुतर्कधूसरगिरा यावत्तु वेदद्विषा
न्यक्कारो न कृत कृतार्थ इव मे तावन्न विद्याश्रम ॥

कथानुसारेण प्रथमेऽङ्के राजवैभवोचिते श्रीनगरस्य विहारे विवादेन बौद्धभिक्षून् पराजेतु वैदिक स्नातक सङ्कपणो वटुश्च प्रविशत । तत्रत्या अभ्यवहारा कामुकविलासाश्च तयोरुद्वेगकरा बभूवु । अनात्मवाद उपहास्य इति तयोर्मतम्, वैदिकयागेषु पश्वालभन जुगुप्साकर्मिति बौद्धाना दृष्टि । तावदेव कतिपये प्राश्निका विहार प्रविशन्ति । तानभि विवादस्य विषय उपस्थापित —

तस्मात् सर्वं शून्य सर्व क्षणिक निरात्मक सर्वम् ।
सर्व दु खमितीत्थ ध्यायन् निर्वाणमाप्नोति ॥ १ २८

इत्यन्ते प्राश्निका स्नातकविजयघोषेण सभा विसृजन्ति स्म । प्रवेशके कोऽपि क्षपणक प्रेयस्या दुष्टतापस्यारचरणयो पतन् ता प्रसादयितुकामोऽनुयन्नपि प्रत्याख्यात । तथापि नवयौवनोल्लासललामकमनीयाया बन्धक्या रागबन्ध दृढीकरोति । बन्धकीवेषधरस्य चेटस्य व्यतिकरे कामुक क्षपणको तस्य पुरुषभाव प्रतीतवान् ।

द्वितीयेऽङ्के स्नातकेन सकर्षणेन भङ्क्त क्षपणको जिनरक्षित स्वयमेवा पूर्णमन्यता व्याहरति —

निषिद्ध यानेनाप्यनुसरति तानेव विषयान्
न तेषा वैषम्यं विमृशति विपाके बहुविधम् ।
न विघ्न कि कुर्मो विशति न शिवे वर्त्मनि मनो
न शाम्यत्येवैषा निरवधिरविद्या भगवती ॥

अनेकान्तवाद विवादविषयमवलम्ब्य सकर्षण प्रश्नबाणमधानपरमुपलभ्य भिक्षुकार्यमवसीदतीति व्याजेन जिनरक्षितस्ततोऽन्तर्हित । गते तस्मिन्नन्य स्तापस प्रविश्य स्वप्रज्यात्वराया कारण प्रति स्नातकमुवाच—जिनरक्षितस्य तपोवने क्षपणकाना महती भोजनव्यवस्थासीत् । तद्यथा—

शममयमिव दृश्यते जग—
न्नियमवतीव चकास्ति मेदिनी ।

इह खलु भवपाश-पङ्क्तयो
विशकलिता इव भान्ति देहिनाम् ॥

इति निशम्य स्नातको नीलाम्वरजैनोपासकानां मेलकं प्रेक्षितुं ततो निष्क्रान्त.। तान् मिथुनैर्विहरतो दृष्ट्वाऽसौ स्वगतमभाषत—

"एकनीलवसनावृताविमौ स्त्रीपुंसौ किमप्यति पेशलं गायन्तौ सह विहरतः।"

ते च प्रत्यवदन्—

जयइ मुणो नीलंवरणाहो
जेण समिउ भवसंवरगाहो।

इत्यादीनां गीतानामयं भाव उल्लसति—अस्मन्मते स्त्रीमुखं भुञ्जाना मोक्षं लभेरन्-इति। अत्रेदमवधेयं यद् राज्ञा शंकरवर्मणा नीलाम्बर-सम्प्रदायोऽपुनरुत्थानाय शासनेनोत्सारितः। अद्यत्वेऽस्माकं देशे प्रचलितांस्तादृशः सम्प्रदायानुपरोद्धुं कः प्रभु. ?

एतैः संकथापि पापलेपदायिनीति मत्वा स्नातको निर्गतः।

प्रवेशके कङ्कालकेतुर्नाम दुर्वृत्तो माहेश्वरसाधकः स्वमित्रेण श्मशानभूतिना सह राजशासनभयेन पलायितुं व्यवतिष्ठते। कङ्कालकेतुर्मित्रं वदति—सुरां पिवामो मांसं भक्षयामः स्त्रीसमागमसुखमधिगच्छामः, सर्वथा नीलाम्बरा इव वयमपि वर्तामहे, तेनावां साधकवेषं निगूह्यान्धतमसे पलायावहे—इति। तौ च सुगन्धादेव्या नाम राजमहिष्या दत्तमानायाः कालशिखाग्नेर्नाम योगेश्वर्या. साहाय्येनात्मरक्षां वांछतः।

तृतीयेऽङ्के संकर्षणो वटुं पृच्छति "तत् किमन्ये न नीलाम्वरच्छायानुकारिण उत्सारणयोग्याः प्रचरन्ति पृथिव्यामलीकतापसाः" इति। वटुराह—

अपेयं किं तेषां न तु विरहितं यद् द्रवतया
अभक्ष्यं यत् तिक्तं दलयितुमशक्यं च दशनैः।
अजाता प्रेता वा यदि परमगम्या स्तनवती
तपःस्थानं योग्यं किमिव यदि वा शौण्डिकगृहम् ॥

इति माहेश्वरानपि कांश्चन तथाभूताञ्छ्रुत्वा तान् सन्मार्गाच्च्युतेर्वारयितुं चिन्तयति संकर्षणे दूतो राजाज्ञातो भीतानन्यानपि तापसान् पलायन-

परान् सन्दिष्टवान्। सकर्षणस्तादृशान् यथास्थिति स्थापयितुमनुरोधया बभूव।

तत श्रीधर्मशिवभट्टारकस्याश्रम गत सकर्षणस्तद्दर्शनपूतमनास्तेनानुगृहीत कियन्त घटीकाल तस्थौ। तावदेव वृद्धाम्भिर्नाम चार्वाकस्तत्र समेत पूर्वं धर्मशिवेन पश्चाच्च सकर्षणेन कृतविवाद-पराभूत। इमे चार्वाका अपि राष्ट्रादपसारणमर्हन्तीति धर्मशिव सकर्षण प्रोक्तवान्। अथ राज्ञ शंकरवर्मण आगमनसमाचारेणाङ्कसमाप्ते पूर्वं सकर्षणो धर्मशिव यथास्थितं वृत्त वर्णितवान्—

न हि द्विष्यो देव शिवमनुपमैश्वर्यविभव
स एवैको हेतु स्थितिविलयसर्गेषु जगताम्।
स रुद्र स ब्रह्मा स हरिरपरो वापि पुरुष
परस्तेभ्यस्तस्मिन् भुवनमखिल सश्रितमिदम्॥

इति शैवा पाशुपता कालामुखा महाव्रतिनश्च स्वैर काश्मीरेष्वेव निवसन्त्विति।

चतुर्थेऽङ्के राजादेशेन महानैयायिकस्य धैर्यराशेरध्यक्षत्वे विपश्चिता सभा पाञ्चरात्रादीना वेदानामिव प्रामाण्यमप्रामाण्य वेति निर्णेतु समायोजिता। वेदा इव पाञ्चरात्रागमा अपि प्रमाणमितिनिर्णयन् धैर्यश्री राह—

प्रमत्तगीतित्वमलौकिकत्व
लाभादि लोभादि न यत्र मूलम्।
तथाविधानामयमागमाना
प्रामाण्यमार्गो न तु यत्र तत्र॥

इति सर्वे धैर्यश्रिया कृतं सत्यानुसन्धान प्राशसन्।

तात्कालिकस्य वस्तुन समायोग आगमडम्बरस्य महान् विशेष। तदानीन्तनस्य काश्मीराधीश्वरस्य शकरवर्मणो मन्त्रिपद भूषयतो जयन्तभट्टस्य पट्टशिष्य सकर्षण स्नातक सन् समयाचार-दूषकाणा वेदनिन्दापराणा साङ्ख्यवाणा दुष्प्रवृत्ती सपरिज्ञाय काश्मीरास्तेभ्यस्तान् निष्कासयितु गुरु प्रोत्साहयति स्म। जयन्तभट्टस्य सम्मत सकर्षणो राजा धर्माधिकारिपदेन सम्मानित काश्मीरान् धर्मकण्टकशोधनेन निरवद्यान् कर्तुमादिष्टवान्—

"भो भो पौरजानपदा, एष खलु महाराजशकरवर्मदेवराजाज्ञया भट्टश्रीसकर्षण सर्वानेव युष्मान् बोधयति—

ये धानादि-जगत्प्रवाह-पतिता नानागमाः साधव—
स्ते तिष्ठन्तु यथास्थिताः स्वसमयाविष्टाश्चरन्तः क्रियाः ।
ये तु प्रस्तुत-धर्म-विप्लवकृतः पापास्तपोऽपायिन—
स्ते चेदाशु न यान्ति घातयति तान् दस्यूनिव क्ष्मापतिः ।।

इति वस्तु-पर्यालोचनेन समयाचारिकस्य धर्मस्य प्रतिष्ठापनेव लक्ष्यभूता ।

अभिनयशिल्पार्जितजीविकोपायानां तदा का स्थितिरभूदिति सूचयदागमडम्बरं कमपि विशेषं दधाति । तद्यथा सूत्रधारः —

"भरतमुनिनोपदिष्टे दशरूपकप्रयोगे किल कृतश्रमा वयम् ।"

इति वदन् परिशीलितनाट्यशास्त्रैरेव नटैर्भाव्यमासीदिति सूच्यते । तथापि तेषां दुःस्थितिर्मनो दुनोतितराम् । यथा च स एव—

"नटत्वं नाम जघन्यः कोऽपि सतताभ्यस्तसूत्कटकपट-व्यापा-डम्बरः कुटुम्बभरणोपायः। ……इन्द्रजालमायाप्रायं नटवृत्तम् । नटो वस्तुस्थित्या जठरभरणे शिल्पपूरणः । तद्वरमिदं कुशिल्पमल्पफलमलघुक्लेशमतित्रपाकरमुपसंहृत्य…… " इत्यादि ।

प्रस्तावनैवामुष्य नाटकस्य नावीन्यं प्रावीण्यं च वहति, यत्र सूत्रधारः स्वव्यवसाय-दुःस्थिति प्रति क्रन्दमानः प्रेक्षकान् सर्वतो व्यावृत्य चेतो नाट्यप्रयोगे दत्तावधानान् करोति । अपि चैनत् सर्वथैवालोकिकमशास्त्रीयं च स्पष्टमुद्घोषयति । पारिपार्श्विकोऽपि जयन्तभट्टस्य व्याजस्तुतिं तन्वान आह—

"काव्यं करोति स कविर्भरतोपदेशमुल्लंघ्य ।" इत्यादि । किमिदं नाटकं नाम, यत्र पञ्चावस्थात्मकं कार्यव्यापारमुल्लंघ्यैव कापि स्वैरिणी सरणिरनुसृता दृश्यते । अपीदं नाटकनामसार्थक्यमपि वहति यत्र चत्वार एवाङ्का विराजन्ते, मन्ये रूपकपर्यायं नाटकशब्दं मनसिकृत्यैव दुर्रूढत्वं नैयायिकस्य नाट्यकृतः संसूचयति । प्रथमाङ्कात् पुरस्तादुपनिबद्धो विष्कम्भको नैव स्कभ्नाति किमपि सूच्यं तत्त्वजालं कथाभागमेवाङ्कस्य दृश्यतां नयति । अमुष्मिन् प्राधान्यं दधद् भिक्षुरङ्कगतस्य नायकस्य संकर्षणस्य प्रतिपक्षत्वं वहति । प्रथमयोरङ्कयोः प्रवेशके क्षपणकयोश्चेटस्य च स्ववृत्तमेव दृश्यते, नैव पूर्वापरकथायोगस्तेन सूच्यते । चतुर्थेऽङ्के धैर्यराशिधैर्येण नटस्य सामाजिकस्य च धैर्यपरम्परा व्याहन्यमाना चकास्ति । धैर्यराशिर्हि आ पञ्चदशाद् आ च द्व्यधिकशततमात् एकनवत्या पद्यानां प्रवचनेन पीडयतितमाम् । नेदं नैसर्गिकं न वा

रङ्गोपयुक्तम् इति सूत्रधारो यदस्य नाटकस्याशास्त्रीयत्वमलौकिकत्व च व्याजेन स्तौति तत् समीचीनमेव निन्दापर प्रशस्तिवाचनम् ।

दार्शनिकविवादोत्तोलकेऽत्र नाट्ये चरित्रानुशीलनं नैव समीक्षादेशमनुवसति, तथापि शत्रु भूतेन जिनरक्षितेन कृता स्नातकस्य प्रशंसा समाकर्षति—

"दुर्विषहमस्य पौरुषम् । अपूर्वेया वक्तृशक्ति प्रज्ञा च ।"

इत्येव जयन्तभट्टो जैनाना मनोबलहानिमेव सूचयितुकाम ।

दर्शनोपदेशपरेऽमुष्मिन् रूपके काव्योचितसौभाग्यभाञ्जि विरलान्येव सन्ति स्थलानि, किन्तु यत्र कुत्रापि कलास्वारस्यमनुरुन्धानो दृश्यत एव जयन्त भट्ट । यथा पश्चिन्याश्छवि —

अथ शार्वेहृदयस्थित विततमूले कमलिनी—
जलं धत्ते लक्ष्मीं पुलिन-तरु-षण्डं प्रतिमिते ।
इहान्तर्दृश्यन्ते विटप-विनिविष्टा क्षितिरुहा
विहङ्गा छादन्त फलशकलमुत्तानवदना ॥ १ १८

नीरसाना चर्चाना मध्ये जातु चर्चैव चन्दनच्छाया स्पृशति हृदयमानुप्रासिकी रचना—

एते धूननभस्मधूमरुचो धूपाग्निसंधुक्षणे
दक्षास्तत्क्षण पीत-पुष्प पुरजित्पूजाय पुष्पासवा ।
घ्या क न हरन्ति तापस-जटा-ग्रन्थि-श्लथीकारिण
श्यामा-पर लास्य-दान-रसिका शैवाश्रमे वायव ॥ २ ५

नीरसता-कर्शितेष्वपि हास्यस्पर्शं समुत्फुल्लतामेव पुष्णाति । यथा द्वितीयाङ्कात् पुरस्तने प्रवेशके क्षपणिकावेषवञ्चनापरश्चेट क्षपणक विज्ञापयति-बालिकेवाहं प्रव्रजिता केनापि यूना शीलभङ्ग कारितेति। क्षपणकस्तु सुधाकुल्यामेवागता मनसि करोति । चेटे च—स युवा ता विहाय कामपि जरती क्षपणिकामवगाहत इति कथयति । क्षपणकस्त (ता) चुम्बितुकाम । अनुद्गतवक्षोजवक्षो वीक्ष्य परीक्ष्य च स्पृष्टाङ्गसन्निवेशोऽसौ कुपितश्चेटमधर्षयत् । मा ताडयसि वा भर्त्सयसि वा चेदह परमाचार्यमाह्वयेयमिति चेटेन पराभूत क्षपणकस्तस्य पादयो साष्टाङ्गमपतत् । तावदेवागता पुरातनी जरती क्षपणिका चेट परारय क्षपणक मुनिभृत भृश प्रहारै शिथिलितबन्धनसन्धि कृतवती ।

आस्तां तावज्जैनान् प्रति वितृष्णा, स्यादेतद् यदि नीलाम्बरीया आसन् कामुकताकीलितहृदयाः, भवतु यथा वा तथा वा स्थितिः, जयन्तभट्टसदृशाद् विदुषो नापेक्षामहे तादृशमधमपात्रावतारणं तथाविधं च हास्यताण्डवम्। अभिव्यञ्जनाया गम्भीरिमा तावज्जयन्तभट्टेन न किमपि सख्यं रक्षतीति न्यायमञ्जरीतोऽपि जानीमः।

चरित्रानुरूपतां भजन्ती भाषा सुतरां भावयति चेतः। प्रवेशके चेटो मागधी परिनिष्ठितामेव वक्ति। नीलाम्बरमिथुनस्य गीतान्यपभ्रंश-निबद्धानि चकासति। वाग्विवादेषु सुस्पष्टतां सुगमतां प्रभावशीलतां च वहन्ती भाषा न क्वापि दुर्वहा भवति - यथा वृद्धाम्भेः कथनम्—

मृगतृष्णाम्भसि स्नात खपुष्पकृतशेखरः।
एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः॥ ३·१०

इत्यभिनयमनुबध्नती सदृब्धा गीः सर्वथा जयन्तभट्ट यशस्वितां नयति।

छन्दःसु प्राचुर्येणानुष्टुभ एव प्रायुज्यन्त। शिखरिणी, शार्दूलविक्रीडितं, वसन्ततिलकमुपजातिरार्याश्चेति बहुशः निबद्धाः। एकैकशः प्रयुक्तानिच्छन्दांसि तु अपरवक्त्रमुपगीतिः पुष्पिताग्रा मञ्जुभाषिणी प्रामाणिका प्रहर्षिणी रुचिरो-पच्छन्दसिकं रथोद्धता स्वागता वैश्वदेवी च सन्ति। इदमपि वैविध्यं वैचित्र्यं वहति।

दार्शनिकेष्वपि वाचारम्भणेषु समुदाचारः समीचीनतां बिभर्ति यथा स्नातकस्य प्रतिपक्षेण जिनरक्षितेन सहालापः—

"स्नातकः—अपि कुशलिनः शिष्यपरिषदा सह भवन्तः।
भिक्षु—स्वागतमार्यस्य। इत उपविश्यताम्। कुशलम्।

स्नातकः—अनुकूलालाप-पेशलैव भवदृशां निर्मिता प्रजापतिना रसना।"

यथा वा संकर्षणमाश्लिष्य धैर्यराशिर्ब्रूते—

"अयमप्रयास-सुलभोऽनुभूयते सकलतीर्थसलिलाभिषेकः।" इत्यादि।

सात्त्विकभावेन वस्तुस्थितिगतं वैषम्यमवगमयितुं जयन्तभट्टेनेदं नाटकमरचयत्। प्रथमेऽङ्के विहारस्य रोचकं वर्णनं समाप्य स्नातकेन व्याहारयामास—

"न खलु तपस्विजनमठिकास्थानमिदम् । राजोद्यानमेतद् । कष्टं भो कष्टम्—

विट-पथिक-लुण्ठ्यमानैर्वन्ध्ये पथि जातगहनदिङ्मोहे ।
अस्थाने क्षिप्यन्ते विविधानि धनानि धनवद्भि ॥ १२०

किलाप्रमाणेऽप्यस्मिन्नागमे विषयसुखपराङ्मुखमनसा समाधिभावनाभ्यास-खवताना यथातथाकल्पितप्राणवृत्तीना क्रिमेवविधै रनुपशान्तजनोचितैर्भोगसाधन-विभवै ।" इति ।

अपि च सांस्कृतिकमुच्चावचत्व सूचयन्त संभाषा महीयन्ते । यथा बौद्धविहारेषु भिक्षूणामभ्यवहारवर्णना—

पञ्चरस-शब्द-निह्नुतमन्यव्यपदेशमत्र मधुपानम् ।
मासाशन च कोटिल्य-रहितमहो तप इच्छूम ॥ १·२१

भोज्य-परिवेषिण्योऽनावृतप्राय गोप्याङ्ग-भङ्ग्य किङ्कर्यो भिक्षून् प्रति कटाक्षनिपाते सरसतरता नयन्ति स्वाद्वन्यन्न-पानानि । अहो पानविक्रमशीलता भिक्षो —

तृषितोऽपि पिबति न तथा जिह्वया भ्राम्यत्कुवलयं पानम् ।
दृष्ट्या यथा दासीना विकसिततरलोचन वदनम ॥ १·२२

आश्चर्यचूडामणि

प्रथमो नाट्यकृद्- दाक्षिणात्याना सम्मतश्चौदीच्यानामपि शक्तिभद्र आश्चर्यचूडामणि स्वकृत्या ८०० ख्रीष्टाब्दमभित स्थिति लेभे । तदनन्तर हि कुलशेखरो द्वितीयो दाक्षिणात्य-नाट्यकर्त्ता बभूव । तत्पूर्वं च भट्टनारायण आसीद् येन प्रभावित स्वकृतौ शक्तिभद्र । शूर्पणखात आरभ्य रामकथामेव वाल्मीकिमनुसृत्य कतिपयान् परिवर्तान् विधाय वर्णितवान् शक्तिभद्र । सीता प्रति हनुमद्द्वारेण राम सदिष्टवान्—

सवसि नमयता धनुर्मया त्व गुरुजघने गुरुमन्दिरादवाप्ता ।
दशवदननिरोधनादपि त्वा युधि विनमय्य शरासन हरामि ॥ ६ २०

परन्तु रावणवधानन्तर सीतायै ,सर्वमन्यथा जातम् । राममनुसृत्य लक्ष्मणो हनूमाश्च नैव ता सुष्ठु समभाषेताम् । रामस्तु—

रजनीचर-गृह -वासिनि कृतसकेतान्यथा छिन्ने-छिन्ने ।
ऋजु भावजडास्त्वया वय छलिता पुश्चलि दण्डके वने ॥ ७ १७

इति वदन् न वाल्मीके राम इव प्रतिभाति । पुश्चलीति निबध्नत

शक्तिभद्रस्य कोपलब्धिः स्तूयेत। कोऽयं विनयो हनुमतो यो रामसंदेशं प्रणय-वचोहर इव वदति—

> आयातं मामपरिचितया वेलया मन्दिरं ते
> चोरो दण्ड्यस्त्वमिति मधुरं व्याहरन्त्या भवत्या।
> मन्दे दीपे मधुलवमुचां मालया मल्लिकानां
> बद्धं चेलो दृढतरमितो बाहुबन्धच्छलेन॥ ६·१८

इत्येवं क्षुद्रप्राय-कल्पना-ताण्डवैरेवाश्चर्यचूडामणिरस्मान् आश्चर्य-स्तूपचूडामारोहयन्निव काचमणीन् रसिकता-सिकतामिश्रान् रसास्वादपथे विकिरति।

## कुलशेखरवर्मणो रूपकद्वयम्

केरलानां महाराजो महोदयपुरमधिवसन् कुलशेखरो वर्मा नवमशताब्दे विरराज। राजशेखरेण स्तुतास्य गद्यकाव्यकृतिराश्चर्यमञ्जरी नाद्ययावत् प्राप्ता। तपतीसंवरणं सुभद्राधनञ्जयं चेति नाटकद्वयमस्य यशोवितानं विभ्रदवलोक्यते। नावं सम्प्रेष्य समाहूतः कोऽपि विपश्चित् प्रार्थितः कुलशेखरेण स्वकृतीर्व्याख्यातुं, व्याख्यानात् प्राक् सतर्कं समवेक्षितुं च। सप्रशंसमसौ पण्डितोऽमुं परमभागवतं निर्धारयामास। तपतीसंवरणस्य भरतवाक्यमपि तदेतत् पुष्णाति—

> अन्योन्यं जगतामपाकविरसा मूर्च्छन्तु मैत्रीरसाः
> संगृह्णन्तु गुणान् कवेः कृतधियां मात्सर्यवन्ध्या धियः।
> विश्लिष्यद् विषयानुषङ्गकलुषीभावा घनश्यामले
> भक्तिर्मे परिपच्यतामहरहः श्रेयस्करी श्रीधरे॥

कुलशेखरस्य कृतिस्तं नाट्यशास्त्राचार्यप्रकाण्डं सूचयति। कथानक-बन्धेषु यथा तथैव काव्यार्थनिर्वाहेष्वमुष्य शेमुषी हरति सहृदयानामन्यमनस्कतां निमज्जयन्ती रसस्रोतसि चित्तानि।

## तपतीसंवरणम्

हास्तिनपुरमहाराजस्तपनः साल्वराजदुहितुर्महिष्यां सन्ततिमनवाप्य स्वप्ने दृष्टात् सूर्यबिम्बाच्च तस्या निरपत्यतां श्रुत्वा दुर्निवारेण क्लेशेनाभिभूतो विदूषकेणापरविवाहाय प्रेरितः कदाचित् तेनैव सह महिष्याः प्रासादं प्रति व्रजन् पथि गुहागृहं समया मारकत्यां शिलायां दिव्याङ्गनायाश्चरणच्छायामालोकयत्। तत्रागता राज्ञी अन्तर्धाय तयोरालापानाशृणोत्। तत्रैव राजा तस्या दिव्यकन्यायाः कर्णपूरमलभत, विदूषकेण संवरणं प्रति सा समासक्त-चित्तेति निवेदितम्। तत्र कर्णपूरे—

कि कुणइ चादअवहू सन्दसिणेहा वि मेहपअरम्मि ।
मुहिआ तिस्से दिट्ठी पुण्णा आणन्दबाहेण ॥[1]

इति सन्देशाक्षराणि वाचयित्वा राजा तन्निपक्वतहृदयो जात । तदन्वेषणाय गच्छता राज्ञा श्रुतपूर्वालापा महिषी समधिगता, सामर्षा सा कृतानुनयापि तमवज्ञायान्यत्र गता ।

अथ सूर्यपुत्री तपती नारदस्य वचसा स्वानुरूप पति सवरणमेव योग्य मत्वानुरक्तेन मनसा मणिशिलातले विश्राम्यन्ती सवरण दृष्ट्वैव दिवमुत्पपात । तत्सखी मेनका कर्णपूरे गाथामुत्कीर्य राजानं परीक्षितु तत्रैव विसृज्य गता ।

एकदा तपती संवरणरागपरवशीभूता पुनरपि तत्रैव देशे समवातरत् । राजापि मृगयार्थे विदूषकेण सहागत । तस्मिन् किंचिद् दूरं गतवति विदूषके कपिमुखं दृष्ट्वा कपय सजातीय मत्वा तदधस्तात् कर्णपूरमाच्छिद्य पलायिता । कर्णपूरविषया जिज्ञासा कुर्वाण राजान स सर्वक्लेशमूलात् कर्णपूरात् स्वमोक्षमकथयत् । अथ वामनावतारभूमि करतलोदकसरो मत्वा तौ तनो वामनमन्दिरं गतौ । विदूषकस्तत्र तपत्याश्छाया दृष्ट्वा राजानं न्यवेदयत् । अन्तत स ता साक्षाददर्शत् । परन्तु प्रणय निवेदयितु चिन्तयत एव तस्य साध्य विधि निर्वर्तयितु समय सूचित । तत स कुलपतेराश्रम प्रतस्थे ।

अथ सवरणो राक्षसान् निहत्य मुनीन् निर्भयान कर्तु कश्चित् कालमयुध्यत । तापसानाश्वास्यासौ तदेव मणि-मण्डप पुनर्गत यत्र तपती प्रथम दृष्टासीत् । विरहवश त रागपरा तपती कर्णपूरहस्तया रम्भया सहाभ्याजगाम, किन्तु स्वभार्या वियोग-सन्तप्त राजानमुत्प्रेक्ष्य क्लेश क्लेश सखीभिराश्वासिता नैव स्वभार्यावियोगजन्मा मनोभव सन्तापयतीति मित्र-सान्त्वनाय कर्णपूरमपि नेदानी लब्धु शक्यमिति वदति विदूषके रम्भया कर्णपूरस्तत्सविधे पातित । विदूषकेण दत्तोऽसौ विरहातुरेण राज्ञानभिज्ञाय निराकृत इति तपत्या मशयो दृढोऽभवत् । तपतीति नाम प्रलपतो राज्ञो मुखादाकर्ण्य लब्धविश्वासा सा 'मत्प्रणयेनासौ का दशा नीत' इति मर्नासकृत्व मूर्च्छिता बभूव ।

ततस्तपतीविरहेण मरणोन्मुख राजानं मृत-परिज्ञाय विदूषके भृगोरात्मान पातयितु गते सखीभि प्रयोजिता, तपती स्व प्रकाश्य राज्ञो हृदयं करेणास्पृशत् । स च ता पाणौ कर्तुमुद्यतो मेनकया वारित 'अस्या पित्रा

---

१ किं करोति चातकवधू सार्द्रस्नेहापि मेघप्रवरे ।
मुहिता तस्या दृष्टि पूर्णानन्दबाष्पेण ॥

सूर्येणानुज्ञात एव भवान् पाणिं गृह्णातु' इति, सूर्यश्च भवदर्थमियं संकल्पित पूर्वैवेति च। अथ राजा धावित्वा विदूषकं मरणान्निवारयति स्म।

संवरणः सूर्यं प्रति द्वादशाहं तपोऽतप्यत। वशिष्ठस्तदानीं तं विरमय्य तस्मै सूर्यं तपतीं याचितवान्। परिणीता सा स्वप्ने कुमारं जनयामास।

क्षणमप्यसोढविप्रयोगयोस्तयोः मिथो रमयतो राक्षसवधनिहित-वैरभावा कापि राक्षसी सुन्दरी सती राजानं प्रति गगनमालायाः प्रणयं निवेदयामास। समुद्रे तं मज्जयितुं कृत-संकल्पां तां विदूषकेण वारितोऽपि राजा व्यामोहवशान्नाभिज्ञातवान् मायाविनीम्। विमानमानेतुं तस्यां प्रस्थितायां सकर्णपूरा मेनका प्रविश्य तमवहितं चकार। राक्षस्या सहाभिसारचर्चां श्रुत्वा तपती ततो वामनमन्दिरं गता राज्ञा मेनकासहकारेणाश्वासिता।

पत्या सह हिमवत्सु रममाणा तपती सूर्यदेवेन न सेहे, सा च हयसेनेन वियोज्य आनायिता। अथ राजशून्यं हास्तिनपुरं पाञ्चालोऽधिकृतवान्। संवरणः प्रियामन्विष्यन् गिरिगहनेषु चरन् कथंचिद् विदूषकेण संगम्य निजं राज्यं परहृतं विदित्वा जेतुं सन्नद्धः सूर्यप्रपितेन रथेन प्रस्थितः। रक्षोभिः कृतया मायया सर्वत्रानावृष्टिरासीत्, किन्तु राजनि प्राप्त एव प्रकामं ववर्ष, येन राज्यं समृद्धं बभूव स्वायत्तं च। गङ्गालोकप्रासादं गतस्य संवरणस्य सविधे कृत-मेनका-रूपा तपती समुपतस्थे। सा हि पितुरादेशविधेया न भूतार्थरूपेण तमुपगन्तुमुदसहत। अथ तयालिङ्गितो राजा तपत्येवेति प्रत्यभि-ज्ञाय रहस्यमपृच्छत्। सा च प्रत्युवाच तपतीं तावत् सूर्यः सावित्रीसन्निधाने सम्प्रेष्य भवन्तं तु वृष्ट्या राज्यमृद्धं कर्तुमिहानीतवान्, अहं च तपत्या वृत्तं निवेदयितुमायाता इति। मेनकारूपेणैव सा राज्ञा सह कंचित् कालं वस्तुमैच्छत्।

अत्रान्तरे सा राक्षसी पुनर्मायया राजानमवञ्चयत्। अन्ततो राजा मायां विज्ञाय यावत् स्वस्थो जातस्तावदेव सूर्येण कृतप्रसादा तपती प्रत्यागता। अथ मोहनिका राक्षसी राजानं क्षमां प्रार्थ्य न्यवेदयत् सूर्यलोकं व्रजन्तीं मां युवयोः पुत्रेण बाणप्रहारैः रुध्यमानां मोचयेति। तपती शङ्काकुला जाता क्व मे पुत्रः कदा कथं जात इति। तामजनिमन्यां वसिष्ठः प्राबोधयत् स्वप्ने लब्धज-न्मानं सूर्यदेवनियुक्तया आ जन्मनः सावित्र्या पाल्यमानं तस्याः पुत्रं रक्षोध्वंस-कारिणमिदानीं तारुण्यमुपगतमिति नवनवा निरन्तराभिवर्धित-कौतूहला सरस-राग-हृद्या कथैव प्रीणाति।

## सुभद्राधनञ्जय

कुलशेखरप्रणीतमपर पञ्चाङ्क नाटक सुभद्राधनञ्जय नाम। महा भारताद् गृहीतेऽस्य कथानके कुलशेखर कांश्चिदभिनवरसोल्लासान् प्रस्तौति। अलम्बुषेण रक्षसा द्वि सुभद्राहरण, गात्रिका समावेश, परमहंसवेष धनञ्जय सम्भावयितु रामकृष्णयोर्गमन, सुभद्राया कृते तादृशमुनि-सेवावसर, सुभद्राया प्रेमालस्वनीभाव पुरुषत्रयस्य, पाशयोजना, इत्येवमादिक तथा नियोजित यथा सहृदयान् भूयिष्ठमावर्जयेत्।

अर्जुनो वर्षेण तीर्थाटन नियम समाप्य सुभद्राप्रणय सुख सम्मुख पराङ्मुखश्च गृहाद् द्वारकाभिमुख कृष्ण द्रष्टु गत। उपप्रभासतीर्थं वटच्छाये विश्राम्यन्नसौ कमनीया कामपि तरुणीमपहरतो राक्षसादाग्नेयास्त्रेणारक्षत्। युवानौ तौ मिथ प्रेमपराधीनावास्ताम्। अप्रत्यभिज्ञाय परस्पर तौ पश्चात्ताप-ग्लान-मानसावभूताम्। सा कन्या सुभद्रा प्रागर्जुने निपक्तहृदया सम्प्रति अज्ञात-कुलशीलमन्य प्रति जातरागेति, अर्जुनश्च सुभद्राया ऋतेऽन्यामिमा स्निह्यामीति। अदृष्टपूर्वान्य न्याकारौ तौ उभयत पाशेन बद्धमिवात्मानमन्वभवताम्। प्रार्थितोऽपि विदूषक कथ सगमयेत्तामिति द्वारका गत विदूषकेण शिष्य-रूपेण सह तापसवेष पार्थश्च। वेषविन्यासाय चीरादिकमाहर्तु गतेन विदूषकेण स्वर्णमयी गात्रिकोत्कीर्णार्जुननामदशका पथि लब्धा। गात्रिकयार्जुनोऽनुममे मया गोपायित-प्राणा सा प्राणप्रियापि द्वारकामेवाधिवसतीति।

रैवतके गिरौ वसन्त साधुवेषमर्जुन द्रष्टुकाम छद्मकौशल सर्व परि-जानन् कृष्णो रामेण सहगत सुभद्रा काममानस्य पार्थस्य वृत्त भ्रातर नैव निवेदयाचकार। ततो नु बलस्त कन्यान्त पुरमानाय्य माधवीलतागृहे कूटध्यानपर सुभद्रा परिचर्या निर्वृत -कृतवान्। तत्र प्रमदवने सुभद्रामसौ प्रत्यभिज्ञातवान् राक्षसापह्रियमाणामिमामेवाह रक्षितवानिति। सुभद्रा च पुरार्जुनविभ्रमश्रवणरक्त-मानसापि रक्षसो रक्षितवन्त युवान प्रति विहितानु-षङ्गा सतीदानी तापसमिम कामये इति त्रिषु सक्रान्तरागमात्मान मत्वा कुलटा-स्मीति सन्तप्ता। अथ सा मर्तुकामा सहकारमण्डपे लतापाश गलेऽबध्नात्। अर्जुनश्च ता पाशमुक्तकण्ठा कृत्वा साहमकारण विज्ञाय त्रिधा स्थितोऽहमेवै-कस्ते प्रिय इति दोषबुद्धिकालुष्यपरिहीणा विधाय स्मृतकृष्णमहेन्द्र। तयार्दानृत्वे काश्यपस्य पारोहित्ये पाणौ गृहीतवान्। बलमनिवेद्यैव कृष्ण पार्थाय सुभद्रामदादिति पश्चाद् विमतो यदून् स्थापयामास।

एकदा स्यन्दनव्रतव्याजेन साङ्ग्रामिकमधिरुह्य रथ सुभद्रा द्वारकाया

वहिरागतामर्जुनोऽपहृतवान्। यदुषु कलकलोऽजायत। बलस्याध्यक्षत्वे समवेतबलास्ते युद्धकामा अर्जुनेन पराकृताः। कृष्णोऽग्रजं सान्त्वयामास।

अथ रामकृष्णयोः सोपहारेषु सपरिजनेषु वहिःस्थितेषु संविहित-स्वागतो-ल्लाससम्भारे चेन्द्रप्रस्थे कालिकादर्शनाय गता सुभद्रा केनापि हृता। विदूषक-दत्तोन्मेष-चेतनः पार्थः सुभद्रां राक्षसान्मोचयितुं प्राभवत्। अथ गोपालिकावेषा सुभद्रा द्रौपदी-समाकारा च काली पार्थमुपासेवेताम्। छद्मपाञ्चाल्या उपस्थि-त्या रूक्ष-रूक्ष-समुदाचारेण चासौ शङ्कापर्याकुलो जातः। अत्रान्तरे परमार्थ-द्रौपदी तं दिदृक्षुमायान्तीं दृष्ट्वान्ततोऽर्जुनो रहस्यमजानात्। काली तस्मै दुर्योधनकारितं सुभद्रापहरणवृत्तं स्वकृतं तस्या रक्षणं च सविस्तरं विज्ञाप्य गता। सर्वे सुखिनो बभूवुः।

कालिदासादारभ्य आ च भवभूतेः काव्यवस्तुनो वास्तुशिल्पं हृद्यं हृदि सम्भाव्यैव परवर्तिनः उपजीव्य जीवन्ति प्रायशः कवयः। नवा तु काप्यभिख्या सर्वेषां पृथक् सौभगं तन्वाना विविक्तामेव व्यक्तिं पुरस्करोति। एतयैव दृशा कुलशेखरं कुलशेखरिणमिवान्यतमं कविषु मन्महे। कथमसौ मेघदूतीयां मन्दाक्रान्तां छन्दोगति निरूपयति—

लास्यारम्भ-प्रवितत-शिखान् नर्तयन्तं कलापान्
केका-पूर-प्रचित-कुहरां कन्धरां द्राघयन्तम्।
त्वं प्रेक्षस्व प्रणयविवशः प्रेमवन्तं मयूर
मा भूर्मेघ क्षणमपि रवेर्मण्डलस्योपरोधी॥ तप० ५.११

इति अप्रस्तुतप्रशंसा कवेः प्रशंसां प्रस्तुतामेव तनोति। कथंकारं समासोक्तिनिबद्धा-वक्रोक्ति-प्रौढिमानमसमं विस्फारयति कवेः—

आपाटलं किसलयाधरमर्पयन्ती
व्यावृण्वती मधुपझङ्कृतिलोक्तानि।
अभ्याशवृत्तमरविन्दकुचोपपीड—
मत्यावर्तं समुपगूहति कल्पवल्ली॥ तप० २.४

व्योम-यान-वर्णना समुद्घाटयत्युद्भावनापटिम्ना सनाथां स्वभावोक्ति-सच्छायां कामपि प्रत्यग्रां प्रतिभामतिशयोक्ति-द्वारवतीम्—

कालः पातव्यमीषां खुरपुटयुगयोर्मेघपृष्ठे हयाना—
मेकस्यैव क्षणस्य प्रथमचरमयोः पूर्वपाश्चात्यभागौ।
वेगस्तब्धा इवामूः कनकवलयवद् व्याप्तपर्यन्तरेखं
नेमीरावर्तमानाः पिशुनयति तडिच्चक्रमाक्रान्तिचक्रम्॥ तप० ५.१६

इति कालिदासमेव स्मारं स्मारमालोचयामः स्रग्धरां काव्यभारतीम्।

श्लिष्ट साङ्गरूपक निर्वाहयन् योगशास्त्रीया विच्छित्ति पुष्णन् सुभद्रापदे वैदग्ध्य-भङ्गीमुद्भावयन् कस्य न सुमनसो मनो हरति कुलशेखर —

यस्या कृते यतिपुरामवलम्बमानो
योग दधाति न चिरादपुनर्निवृत्तिम्।
क्लेश जहत् सहभुव मधुरा मतिमें
प्राप्नोति निद्रु निमचिन्त्यरसा सुभद्राम् ॥ सुभ० २ ३

निसर्ग चित्रेपु चित्र-वर्ण-योजना-कौशल कवि कुलशेखर यथार्थनामान करोति—

विशिलष्यद्दलमालया प्रविरलं पुष्पोद्गमासवे—
रक्तवंद्युन्नङ्घ्रया कलिकया प्रस्तूयते मञ्जरी।
गायन्तो मलरागमङ्कुरसरंसचूतस्य यच्छुवने
श्च्योतदिम शिशिरोपरोधशिथिल पुष्पं न पुस्कोकिला ॥सुभ० २ ८

लघुतरवाक्य-विन्यासे प्रवीण कुलशेखर —

अनिलयसि लज्जा धैर्यबाध पुनापि
प्रथयसि परिताप प्रश्रय प्रम्लिनोपि ॥ सुभ० २ २

अपि च,

इमौ कर्णौ वर्णौ श्रुति-सुख निविष्टेद्दशगिरा-
ममू दृष्टौ दृष्टौ सपदि परिपोताकृतिपुधे।
अमू यद्वा यथाममपनद् येपु गणना—
दिदं चित्तं चित्त वहति यदि मा बालनयमात्म् ॥ सुभ० २ १२

आसता तावत् कतिपयास्त्रुटयस्त्रुटय इव सवत्सरे कुलशेखर कृति-समुच्चये, कवित्वेन महीयसी प्रतिभा जाज्वलीति या नैव विवादमुत्पादयति प्रेक्षावताम्।

## विबुधानन्दम्

शीलाङ्को नवमशताब्दे क्वचित् विबुधानन्दं नाम नाटकं विरचितवान्। जैनानामेकादशाङ्ग्याख्यातृत्वेन प्रसिद्धिभाक् शीलाङ्क राष्ट्रकूटवशीयनृपतेराश्रितस्तद्वंशधरमेव नायक निबध्य लक्ष्मीधरनामानं प्रतिमाप्रकाशनामरभारतीमालोकयामास।

इदं च करुणरसपूरं नाट्यम्। राष्ट्रकूटवश्यो राजकुमार श्रीधरो नाम न केवलं पुरुषकार फलनीतुन्न स्वपौरुष परीक्षितुं वसुधाभ्रमणाय प्रातिष्ठत। स राजशेखरस्य राज्ञो राजधानीं गत। कञ्चुकिना राजा तस्मै दुहितरं

बन्धुमतीं राज्यार्धं च दातुं सन्दिष्टवान्। क्रीडोपवने राजकुमारो बन्धुमतीमदर्शत्। तयोः प्रणयावतारः प्रथमं पदं क्रान्तः। विदूषकेण सह कन्यान्तःपुरं गतोऽसौ चित्रागारे बन्धुमत्या प्रतिकृतमात्मानमपश्यत्। तत्रैवान्तर्हिता बन्धुमती ससखीका तयोरालापं श्रुत्वापि तस्यात्मगतं प्रेम नाशक्नोद् विनिश्चेतुम्। श्रीधरोऽपि तथैव तां प्रति सन्दिहान आसीत्। अस्मिन्नेव मिथोद्वैविध्यव्यतिकरे राजकुमारः स्वप्रतिकृतिपार्श्वे बन्धुमती-प्रतिकृतिमालिखितवान्। अथ कियद्दूरं गत्वा मया कृत आलेखः कामपि शङ्कां जनयेदिति विदूषकं तच्चित्रमपसारयितुं निरदिशत्। अथ चित्रं प्रोञ्छितुकामं विदूषकं पूर्वोपस्थिता बन्धुमत्याः सखी दृढं बाहुभ्यां गृहीतवती। तं मोचयितुं गतस्य श्रीधरस्य पाणौ बन्धुमत्याः पाणिं निधाय विदूषको वैवाहिकं समारम्भं समपादयत्।

तस्मिन्नेव दिने सम्पन्ने विवाहविधौ आभूषणमञ्जूषां निरीक्षमाणः श्रीधरस्तत्र स्थितेन कालसर्पेण दष्टोऽम्रियत। राजशेखरश्च प्रव्रज्यां ग्रहीतुमना महिष्या पुत्रस्ते शिशुर्न तावद् राज्यपरिपालनाय शक्त इति वारितो मुमुक्षुरेव गृहेऽवसत्। जैनाचारमनुरुध्य शीलाङ्कोऽत्र उपदेशप्रवण एव लक्ष्यते—

> मन्त्रैर्योगरसायनैरनुदिनं शान्तिप्रदैः कर्मभिः
> युक्त्या शास्त्रविधानतोऽपि भिषजा सद्बन्धुभिः पालितः।
> अभ्यङ्गैर्वसुभिर्नयेन पटुना शौर्यादिभी रक्षितः
> क्षीणे ह्यायुषि किं क्वचित् कथमपि त्रातुं नरः शक्यते॥

एवं विधोपदेशानुशासनमेव नाट्यकर्तुरुद्देश्यमिति कृत्वा तस्य कवित्वं प्रति औदासीन्यमेव भजामः। सन्ति काश्चन सूक्तयोऽपि—

१. भवितव्यतैव लोके न खेदनीयं मनस्तेन।
२. विहाय शोकसरणीं कार्ये मनो दीयताम्।
३. न च कमलाकरं वर्जयित्वान्यं राजहंसमालाभिलषति।
४. न शक्यमन्यतः प्रवृत्तं चित्तमन्यतो दातुम्।
५. स्त्रीणां रोदनेनैव स्नेहाविष्करणं नानुष्ठानेन।

शृङ्गाराय कृतसामग्रीसम्भारोऽपि शीलाङ्को नात्मीयं जातु शीलाङ्कं मृगमिव मृगलाञ्छनो विमुञ्चति। तत्रैव तस्य कृतिर्मनो रमयति यत्रासौ शिक्षक इव दत्तचपेट इव जागरयति सुप्तां कामपि चारित्रशिक्षाम्—

> यच्चिन्त्यते हृदयेन नैव, युज्यते न चैव युक्तिभिः।
> विघटन-संघटनपरस्तदपि हताशो विधिः करोति॥

तथापि क्वचिदेव कदाचिदेवासौ कथकथमपि सघटयति वीररसोल्लासमपि—

> वज्रप्रकोष्ठकरजाग्रचपेटघात—
> निष्पिष्टदर्तदशनोत्कटमौग्तिकौघं ।
> सिह सहायविकलोऽपि दलत्यरातीन्
> अतर्गत ननु सदैकमेव सत्त्वम् ॥

अप्रस्तुतप्रशसामुखनैवेह वीरप्रशसा प्रस्तुता। शृङ्गारमपि असौ क्लेशक्लेशमप्रस्तुतेनैव प्रशसति—

> महकारमञ्जरीं वर्जयित्वा महामहिमपरिमलोद्गाराम्।
> अभिलषयवल्लीं कुत्रापि कि मधुकरी युवक ॥

यति विच्छित्ति विहीनेय छन्दोविधिति सहृदयान् बन्धुरे गिरिपथे धावयति। सर्वथा सर्वात्मनेव मुनिव्रत शिशिक्षिपु. शीलाङ्कस्तनोति प्रातिभ प्रकर्षम्—

> पिपतिपुरय रवौ वा जरायुणोत्क्षीणदेहसारोऽपि।
> धर्म प्रति नोत्सृच्छति वृद्धपशुस्तिष्ठति निराश ॥

तथापि कवे प्रासङ्गिक शृङ्गारानुराग प्रकृत्यैव वैवश्यमादत्ते—

> सच्चामीकर-चारु कुम्भयुगवत् तथ्या स्तनौ राजत ।
> श्रोणी-मन्मथ मन्दिरोरुयुगल स्तम्भायतेऽस्या स्फुटम् ॥

### कल्याणसौगन्धिकम्

कल्याणसौगन्धिकं नाम व्यायोगो नीलकण्ठेन रचित । असौ कदा प्रादुरभूदिति न तावन्निश्चप्रचम्। आ नवम्या आ च पञ्चदश्या शताब्द्या अय जनुषा भुव भूषयावभूवेति अशीतिरेव विवेचकाना दुनोति चेत। भवतु, डेमहोदयस्तु एन नवमशताब्दीक निरधारयत्। व्यायोगश्चाय महाभारतीया वनपव कथामधिष्ठाय रचितो यत्र द्रौपद्या प्रीतये वृकोदर सौगन्धिक पुष्पमानिनीषू रक्षोभिर्युधे हनूमता च वाक्कलि कल्पितवान्।

वायुवेगेनापहृत दिव्य कुसुममाघ्राय तस्य रामणीयक च निभाल्य पाञ्चाली तादृश पुष्प चकमे। वायुसुनु र्वायुवेगेन धावन् विप्रदर्म्पतिभ्या वार्यमाणोऽपि अविरतो दुर्गम वन्धुरेषु गिरिपथेषु नैकविधान विघ्नान् प्रतिद्रवन् गन्धमादनस्थ त जलाशय प्राप यो विकचै सौगन्धिकै प्रतिच्छन्न परिमलेन वातलहरी सम्भारयन् विरराज। निर्भीक पुष्पाणि चिन्वानो भीम क्रुद्धेन रक्षसा सगतो विभीषितश्च न मरिष्यसि एवेत्युक्त्वात्मपरिचयेन तमाहूय गदया निहत्य पलायनपरायणं चकार। अथ नेपथ्यात् श्रूयते स्म—भीम पुष्पावचयान्मा स्म

निवार्यतेति। सोऽपि पुष्पाण्यवचित्य कदलीवनं प्रविष्टस्तत्रत्यं सौमनस्य-भाजं निसर्गमहिमानं वीक्ष्य मनसि चकार—अत्र कोऽपि प्रतापवान् निवसतीति। असौ कण्डूयमानभुजो युयुत्सालोलमना आह्वयत्। प्रत्याह्वानेन सह हनूमान् संस्कृतां गिरं संगिरन्नागतः। अथासौ जरठः कपिरिति कृत्वापसरणाय दत्तादेशो नाहं वार्धक्यपरिभूतः स्थानान्तरं गन्तुमपि प्रभुरिति प्रत्यवदत्। अपसारयितुं कृतोत्साहो भीमो न तस्य पुच्छमपि चालयितुं शशाकेति मनसि स्वं निन्दन्नपि देवैः स्तम्भितमिति तं तथास्थितमेव मुष्टिभिश्चूर्णयितुं घोषयन् ममाग्रजो हनूमान् स्वजातीयं त्वां रक्षितुं नापतेदिति समकथयत्। ततो मुष्टीमुष्टिरणे प्रवृत्ते विद्याधर-दम्पती तौ वारयित्वा सुरेन्द्र-सन्देशेन युवां भ्रातृभावेन रामलक्ष्मणाविव स्तामिति निरदिशताम्। रामनाम्ना श्रुतिगतेन भाव-विह्वलो वानरोत्तमः संग्रामेऽर्जुनस्य ध्वजे स्वस्यावस्थानं प्रत्यजानीत्।

व्यायोगानुरूपं कथावस्तु योजयन् भीमं च धीरोद्धतं चित्रयन् नीलकण्ठस्तत्र तत्र परिवर्तनानि विधत्ते स्म। प्रसङ्गाननुसृत्य लघुकलेवरेऽस्मिन् रूपके संवादेषु काव्य कौशल-लेशानपि पश्याम —

लज्जानमद्—वदन—मन्थरमीक्षणार्धं
सप्रश्रयाहृतकरद्वयरुद्धवक्षः।
साकूतदर्शनकृतैक-कटाक्षपात—
माश्लेषसौख्यमनुजस्य सुधैत्यभेदः॥

इति हनुमद्वचनसुधादीधितिर्विनिद्रयति मानसकुमुदं रसिकानाम्। वात्सल्यमिह सजीवामिव मूर्तिं दधानमवतरति। वर्ण्य-वस्तु-माला-गुम्फन-पटिम्ना हरत्येव हृदयं नीलकण्ठः कामपि चित्र-पक्षति-विच्छित्तिमयमिव नृत्ते पदैर्योजयन्—

अन्तर्गुहोद्गतमहाजगरस्य-दंष्ट्रा—
व्याकृष्टपादमुरुगर्जितमेव सिंहः।
दंष्ट्राग्रकृष्टपृथुकुम्भतटास्थिवल्गद्—
ग्रीवानिखातनखमाक्षिपति द्विपेन्द्रम्॥

इत्यहोऽजगरधृतैकपादः सिंहो गजेन्द्र-कुम्भे निखातदंष्ट्राश्चित्रितश्चित्रयते मनः। अन्येनाक्रान्तोऽन्यमाक्रामतीति सनातनी लोकयात्रा व्यज्यमाना भासतेतराम्।

औद्धत्यप्रधाने व्यायोगे खलु विकत्थन-प्रचुरा एव संवादा योज्यन्ते किन्तु तत्र नैपुणं विलीभूतमेव दृश्यते। यथा राक्षसः —

खड्गेन क्षतविग्रहस्य पिशितैः क्लृप्तोपदंशोत्तरं
कोष्णं ते रसयन् कपालचषकेणाकण्ठमत्तासवम्।
आन्त्रस्रग्गुणमुद्वहन् विरचयन्नेपथ्यमस्थिव्रजै—
र्नृत्यन् मत्तविलासजां धनपतेः प्रीतिं करिष्याम्यहम्॥

## राजशेखरस्य रूपकाणि

काव्यमीमांसाया प्रणेता कस्य न विदितो राजशेखर कवि । यायावर-वंशीयोऽयं स्वजन्मना महाराष्ट्र-प्रदेशमलंचकार। स ब्राह्मण क्षत्रियो वेति विवादप्रसंगे बालरामायणे १ १५ अनुसारेण रामस्य वंशरत्व तस्य क्षत्रियत्व-मेव प्रकटीकरोति। अस्य पूर्वजोऽकालजलदो महाराष्ट्र-चूडामणिरासीद् गुणसंमतो विद्वान् पिता च राजमन्त्री बभूव। वाग्विलासरसिको राजशेखर आत्मान वाल्मीकि-भर्तृमेण्ठ-भवभूतीना नवावतारं सम्भावयाबभूव—

बभूव वल्मीकभव कवि पुरा
तत प्रपेदे भुवि भर्तृमेण्ठताम् ।
स्थित पुनर्यो भवभूति-रेखया
स वर्तते सम्प्रति राजशेखर ॥ बाल० १ १६

ध्वन्यालोकलोचन-प्रमुखेषु प्रमाणग्रन्थेषु लक्षीकृतोऽयं कवि स्वमनेकधा परिचाययामास—

आपन्नार्तिहर पराक्रमधन सौजन्यवारांनिधि—
स्त्यागी सत्य-सुधा-प्रवाह-शशभृत्कान्त कवीनां गुरु ॥

कान्यकुब्जनरपालेन महेन्द्रपालेन सभाजितोऽसौ सेविन कृष्णशङ्करवर्मणा स्तुतो यथा—

पातुं श्रोत्ररसायनं रचयितुं वाच सतां सम्मता—
व्युत्पत्तिं परमामवाप्तुमवधिं लब्धुं रसस्रोतस ।
भोक्तुं स्वादु फलं च जीवित-तरोर्यद्यस्ति ते कौतुकं
तद् भ्रात शृणु राजशेखरकवे सूक्ति सुधास्यन्दिनी ॥

राजशेखरस्य स्थितिकालो निश्चितप्रायो विदुषाम्। महेन्द्रपालो हि ८८५ ईसवीत ९१० पर्यन्त कान्यकुब्जाना शासको बभूव। राजकुमारत्वे स राजशेखरस्य शिष्यत्वं गृहीतवान् भवेदिति। ८७५ खीष्टाब्दत ९२५ पर्यन्त हि तस्य रचनाकालो भवेत्।

स भुवनकोश नाम भूगोलीयं ग्रन्थ विरचितवानिति काव्यमीमांसात प्रतीयते, हेमचन्द्र उज्ज्वलदत्तश्च तस्य हरविलासं नाम काव्यं लक्ष्यीकृतवन्तौ। किन्तु न तौ ग्रन्थौ प्राकाश्यं नीतावद्य यावत्। अस्य रूपकरचनासु बाल-रामायणं, बालभारतं, विद्धशालभञ्जिका, कर्पूरमञ्जरी चेति समुपलभ्यन्ते।

## बालरामायणम्

बालरामायणं महानाटकं सीताप्रतिकृतिनिवेशेन छायानाटकं च मज्ञितम्। रामायणीयां कथां भूयः परिवर्त्यात्र कथानकं गुम्फितम्। सीता-स्वयंवरे रावणः प्रहस्तेन सैन्यपतिना सह पुष्पकमारुह्य जनकपुरं गतः। स तत्र मैथिलीक्रयधनुः सीतां चानेतुमादिदेश। जनकेन स्तुतस्य शिवस्य प्रवेशेन गुरूभूतं तद् धनुः सज्यं कर्तुमप्रभवन् रावणस्तद् भूमौ क्षिप्त्वा मिथ्याविकत्थनो बभूव। रावणं निहन्तुं बाणं सन्धाय उद्यतः राजा शुनःशेपेन वारितः, शापोदकं गृह्णंश्च शतानन्देन निवारितः। दशाननकृतां शिवचापावमाननां श्रुत्वा तं दण्डयितुं समागतो जामदग्न्योऽपि कथंकथमपि निवारितः, किन्तु जामदग्न्यरावणयोर्वाक्कलहस्तत्र जात एव। रावणः जानक्या उपयन्तारं चन्द्रहासेन द्विधाकर्तुं प्रतिज्ञाय निवृत्तः। देवलोके सफलप्रयोगं भरतकृतं सीतास्वयंवरनाटकं दिदृक्षू रावणस्तल्लङ्कायां नटैः प्रयोजयामास। तत्र रामेण पाणिगृहीतीकृतां सीतां प्रेक्ष्य रावणोऽवदत्।

यातः पवं मम रुपां च मृवैव रामः। ३.६०

सीतारामयोर्विवाहानन्तरं दशरथो जनकपुरं जगाम। धनुर्भङ्गेन कुपितः परशुराम आयातः। तुमुलं वाग्युद्धं संवृत्तम्। धनुर्युद्धे रामो जामदग्न्यं पराजितवान्। लंकेश्वरः सीता-विप्रलम्भ-सन्तप्तस्तस्याः प्रतिकृतिं कारयित्वा तन्मुखे सारिकां निवेश्य वार्तालापैर्मनो विनोदयांचकार। अत्रान्तरे राममभिसर्तुमयोध्यां गता शूर्पणखा। कृत्तनासा सा रावणं प्रति सीतां त्वत्कृते हर्तुमहं गता कृत्तनासास्मीति सकपटं निवेदितवती। रावणश्चायोध्यां गतो राक्षसदूतैर्मिथ्यासन्देशं व्याहारि—

स्वयं मया प्रेमपरीक्षणाय प्रवर्तितः स्वाकृतियन्त्रयोगः।
अथाहमेवागणितैरहोभि र्दशाननान्तं नियतं प्रवत्स्ये॥

अत्रान्तरे दशरथः सकैकेयीक इन्द्र-साहाय्याय दैत्यान् विजेतुं गतो विजयी बभूव। किन्त्वयोध्यायां कोऽपि राक्षसो मायादशरथः, शूर्पणखा मायाकैकेयी, तस्या दासी मन्थरा च बभूवुः। इत्येवम्—

"आभ्यामपि कृतक-कैकेयी-दशरथ-रूपधारिभ्यां छलितो रामभद्रः।"

इत्येवं प्रभृतीनि वृत्तानि परिवर्त्य राजशेखरेण नियोजितानि। शार्दूलविक्रीडितैरतितरां विक्रीडन् राजशेखरो मधुरमधुरामेव प्रायेण गिरमुद्गिरति।

वीराद्भुतप्रायरसे प्रबन्धे लोकोत्तरं कौशलमस्ति यस्य। १.२

सोऽसौ नाट्यशैलीमधुरिमाणं वैदर्भीं प्रसादजन्मानं वक्ति—

"वाग् वैदर्भीमधुरिमगुणं स्यन्दते श्रोत्रलेह्यं
वस्तुन्यासो हरति हृदयं सूचितमुद्रानिवेद्यः ।
सद्यः सूते रसमनुपमं प्रौढिजन्मा प्रसादः ।
सन्दर्भ-श्रीरिति कृतधियां धाम गौर्देवतायाः ॥" ३ १४

अपि चान्त्यानुप्रास संगीत संगमयन्नन्य इव भाति कवि—

द्युतिजित करवालः सूतवंशो प्रवालः
स्फुटित-कुटजमालः स्पष्टनीलत्तमालः ।
इह हि गतमरालः केसराली कराले
शिखरिणि मम कालः सोऽभवन् मेघकालः ॥ १० ५२

सीतायां सौकुमारसौभाग्यालेखनपटिमा कोऽप्यपूर्व एव—

मुञ्चत्यग्रे किसलय-चयं लक्ष्मणो यानि सीता-
पादाम्भोजे विमृजदसृजो तत्र सञ्चारयन्ति ।
रामो मार्गं दिशति च ततस्ते खिले नापि बाहुना
शैलोत्सङ्गप्रणयिनि पथि क्रोशमेकं वहन्ति ॥ ६ ५७

विरहिणो लङ्केश्वरस्य शीतोपचार-निर्वाहाय प्रार्थ्यमाना दक्षिणापथ-नद्यो राजशेखरस्य हासप्रतिभामुद्घाटयन्ति—

पादौ पीडय ताम्रपर्णि, मुरले हस्तौ हृदि स्थाप्यतां
भो कावेरि मृणालदाम वितर द्राङ् नर्मदे वीजय ।
त्वं गोदावरि देहि चन्दनरसं हे तापि तापोत्पमे
शाखयं मूत्र मन्त्रवारि विरही लङ्केश्वर सीदति ॥ ५ ५०

## बालभारतम्

राजशेखरकृतस्य बालभारतस्याङ्कद्वयमेवादिमं सम्प्रति लभ्यते, शेषं च नाद्य यावत् समासादितम् । इदं च द्रौपदी स्वयंवरादारभ्यते । बन्दी घोषयामास—

सकल भुवन रक्षा-न्यस्ततन्द्रा नरेन्द्राः
शृणुत गिरमुदारामादराच्छ्रावयामि ।
इह हि सदसि राधां यः शरव्यीकरोति
स्मरविजयपताका द्रौपदी तत्कलत्रम् ॥ १ ३२

प्रवासिनः पाण्डवाः कृत-विप्रवेषा विप्र-पङ्क्तौ निषेदुः। अर्जुनादृते न कोऽपि साफल्यं लप्स्यते इत्यासीद् द्रोणाचार्यस्य निर्णयः। सर्वेषु पराङ्मुखेषु राजसु ब्राह्मणवेषोऽर्जुनो राधामविध्यत। नाज्ञातकुलशीलाय कन्या सम्प्रदेयेति वदतोऽनादृत्य स द्रौपदीमनयत्। प्रतिपूर्णे सति क इह प्रश्नः कुलशीलयोरिति ? शेषा राजानो युद्धोद्यता भीमेन निराकृताः।

अथ विदुरेण वर्जितापि द्यूतक्रीडा समारब्धा। तत्र युधिष्ठिरः सर्वस्वं हारयित्वा द्वादशवर्षीयं वनप्रवासमङ्गीकृतवान्। पणीभूतां हारितां च पाञ्चालीं सभासदनमानीय दुःशासनस्तां निर्वस्त्रां विधातुं यतते स्म किन्तु मायया तस्या नवान्येव वस्त्राणि तामावासयन्ति स्म। दुर्योधनानुजो विकर्णो दुःशासनं निवारयामास—

> भो दुःशासन कः क्रमो द्रुपदजा-केशाम्बराकर्षणे।
> दुर्वृत्तं क्षमते न कस्यचिदयं भ्राता विकर्णस्तव॥ २.४३

भीम-कृताया दुर्योधन-रक्त-पान-प्रतिज्ञाया अनन्तरं द्वितीयोऽङ्कः परिसमाप्यते।

प्रस्तावनायाः परस्तादत्र नाटके वाल्मीकि-व्यासयोः संवाद आयोजितः। व्यासो वदति—

> यद्गुम्फितमुद्रा सुहृदर्थवीथी कथारसो यच्चुलुकैश्चुलुक्यः।
> तथामृतस्यन्दि च यद् वचांसि रामायणं तत् कवितॄन् पुनाति॥ १.१७

वाल्मीकिश्च व्यासकृतं महाभारतं स्तौति—

> दन्तोलूखलिभिः शिलोञ्छिभिरिदं कन्दाशनैः फेनपैः।
> पणप्राग्भनिर्मितम्बु-कवलैः काले च पक्वाशिभिः।
> नीवार-प्रसृतिपचैश्च मुनिभिर्यद्वा त्रयीध्यायिभिः।
> सेव्यं-भव्यमनोभिरर्थपतिभिस्तद् वै महाभारतम्॥ १.१९

## विद्धशालभञ्जिका

विद्धशालभञ्जिका नाटिका नायिकायाः प्रतिकृतिं शालभञ्जिका-परपर्यायां निबध्नती नाम-सार्थक्यं धारयति। शालभञ्जिकां हि समालोक्य नायकस्य रागोऽवर्धतेति राजशेखरस्याभिनवोद्भावना। मध्यप्रदेशस्थायां त्रिपुर्यां ८९६ ईसवीयेऽब्दे नाटिकेयं विरचिता। तत्र हि राजशेखरः कलचुरि-राजसभाजितः कियन्तं चित् कालमवसत्।

त्रिपुर्या कलचुरिसम्राड् विद्याधरमल्लोऽत्र नायको नायिका च मृगाङ्कावली लाटराजस्य चन्द्रवर्मणस्तनूजा बभूव सा सन्तानान्तरविहीनस्य पितुर्गृहे पुरुषवेषा सती पुत्रप्रेम्णा परिलालिता। तदनुरूपं च सा मृगाङ्कवर्मेति नाम्ना ख्याताभवत्। त्रिलिङ्गाधिपतेर्विद्याधरमल्लस्य कृते तन्मन्त्री भागुरायणस्तां चन्द्रवर्माणमयाचत। दैवज्ञगणनामनुरुध्य सा चक्रवर्तिपत्नी भविष्यतीति आशान्वित एव तथोपायं रचयामास भागुरायण। असौ निद्रावसरे विद्याधरमल्लं नायिकया मृगाङ्कावहारं परिधापयामास। तामेव स स्वप्नेऽदर्शत्। स्वप्नगलस्थहारं च नायको विदूषकं वर्चितवान्। विदूषकोऽपि प्रागेव कुवलयमाला नाम कुन्तलराजपुत्रीं प्रति नायकस्य रागमवर्धयत्। राज्याद् भ्रष्टा हि कुन्तलनृपतिश्चण्डसेनः सपरिजनो यदा नर्मदाया स्नानायावतीर्णस्तदा नायकः कुवलयमालामवालोकयत्। सापि तदा त्रिपुरीराजभवनमेव शरणं कृतवत्यासीत्।

विदूषकः स्वप्नश्रवणानन्तरं विद्याधरमल्लस्यान्यमनस्कतां विनोदयितुं भागुरायणकारितं स्फाटिकं केलि-कैलास-मन्दिरं तं नीतवान्। तत्र तद्भित्तिलिखितां स्वप्नदृष्टाया नायिकाया शालभञ्जिका प्रत्यभिज्ञायासौ तदङ्गलावण्यं प्राशंसत्—

चक्षुर्मेचकमम्बुजं विजयते वक्त्रस्य मित्रं शशी
भ्रूसूत्रस्य सनाभिमन्मथधनुर्लावण्य-पुण्यं वपुः।
रेखाः कापि रदच्छदे च सुतनोर्गात्रे च तद्वर्णिमी
मेनां वर्णयिता स्मरो यदि भवेद् वैदग्ध्यमभ्यस्यति ॥ १ ३३

स्तुतसौन्दर्याया शालभञ्जिकाया कण्ठे स तमेव हारमधारयत्।

भागुरायणस्याभिसन्धिं साफल्यं नयन्ती मृगाङ्कावली तमेव केलिकैलासमध्यवसत्। स्फटिकभित्तेः परतो राजा तां दर्शं दर्शमात्मानं विनोदयामास। किन्तु प्रतिभासानन्तरं सान्तर्हिता बभूव।

अथ कूटविवाहरचनानिपुणा राज्ञी वधूवेषेण चेटेन डमरुकहासेन विदूषकस्य परिणयं समपादयत्, रहस्यं च सत्वरमेव प्रकाशितम्। कूटविवाहप्रतिकाराय चिन्तापरस्य विदूषकस्य सान्त्वनार्थं धात्रीदुहिता मेखला मृत्युभयं प्रदर्श्य विदूषकपादयोर्मध्यान्नि सारितेति प्रतिशोधेन सोऽतुष्यत्। अपरं कूटविवाहं कल्पयन्ती महिषी स्वकूट-पङ्के एवावासीदिति परिहासमयी कथार्थे सरति।

मृगाङ्कवर्मवेषेण मृगाङ्कावली त्रिपुरीप्रासादेऽवसदिति भागुरायणः प्रकटयामास। पश्चात् राज्ञी वधूवेषसम्भारीकृत्य मृगाङ्कवर्माणं राज्ञे दत्तवती। वधूपित्रोद्घाटिते रहस्ये कूटपरिणयः वास्तविको जातः। अन्यच्च राज्ञी पूर्वं कुवलयमालाया विवाह मृगाङ्कवर्मणा सह संकल्प्य विफलीभूता तामपि राज्ञ एवावरोधे निधाय सन्तुष्टा बभूव।

## कर्पूरमञ्जरी

शौरसेन-प्राकृत-कृतस्य कर्पूरमञ्जरीसट्टकस्य काव्यस्वरूपमुद्घाटयन्ती गाथाकर्षत्येव सुमनसां मनांसि। यथा—

अत्थविसेसा ते च्चिअ सद्दा ते च्चेअ परिणमंतावि
अत्थविसेसो पव्वं भासा जा होउ सा होउ॥

इयमपि प्राकृता वाक् संस्कृतेव शार्दूलविक्रीडितैः क्रीडितमातनोति कर्पूरमञ्जरी-कानने—

जे लङ्कागिरि-मेहलासु खलिआ संयोअ-खिण्णोरई—
फारोप्फुल्ल-फणावली-कवलणे पत्ता दरिद्दत्तणं।
ते एण्हि मलआणिला विरहिणी-णीसास-संपक्किणो
जादा झत्ति सिसुत्तणे वि बहला तारुण्ण-पुण्णा विअ॥

गिरिराजशेखर-सरस्वती साकूतोक्तिसखीदत्तसहचारा स्थाने कृतालंकृति-विन्यासा निर्दोष-पदसञ्चारा गुण-गरिमाणमनतिक्रम्य शय्यामधिशयाना कदाचिद् रागमुपवीणयन्ती, क्वचित् संस्कृतां भूमिमभिक्षरन्ती, क्वापि प्राकृता-मुर्वरयन्ती कथाकदम्बानुल्लासयन्ती भावकोकनदसमुदयमाकलयन्ती क्वचिदनुभावमसृणमालपन्ती संचारिसौरभमास्वादयन्ती शब्दब्रह्मसागरमभि-सरति क्वचिदभिसारयति च।

## क्षेमीश्वरस्य नाटकद्वयम्

चण्डकौशिक-नाटकस्य प्रणेता क्षेमीश्वरो दशमशताब्द्याः पूर्वभागे आर्यावर्ताधीश्वरं महीपालदेवमाश्रित्य काव्य-सरस्वतीं निषेवते स्म। अनेन नैषधानन्दं नाम सप्ताङ्कमन्यदपि नाटकं नलदमयन्तीकथानकमनुसृत्य विरचितम्। नाद्ययावत् नैषधानन्दं प्रकाशितम्।

चण्डकौशिके हरिश्चन्द्रविश्वामित्रयोः कथानकं मार्कण्डेयपुराणाद् देवीभागवताच्चादाय हृद्यतामानीतं सर्वथा व्याख्याति विश्वामित्रस्य

च'डताम् । नाटकमिदं दट्टकालसम्मत- राजकुमारवार्तिकेयेन प्रथमप्रयोगार्थ-मुद्दिष्टम्। श्रीधरदासेन सदुक्तिकर्णामृते विश्वनाथेन च साहित्यदर्पणेऽस्य पद्यानि सगृहीतानि। अद्यापि भारतेऽस्य कथानकं स्मृत्वा लोको हरिश्चन्द्रस्य सत्योत्कर्षं प्रशंसति विश्वामित्रस्य क्रूरता निन्दति च।

प्रथमत ऐतरेयब्राह्मणे हरिश्चन्द्र इति नाम विख्यातम्। महाभारते कथोपनिबद्धो हरिश्चन्द्रो भूय उत्कर्षं लभते। तथा हि—

> सत्य वदत मासत्य सत्य धर्मं सनातन ।
> हरिश्चन्द्रश्चरति वै दिवि सत्येन चन्द्रवत् ॥ अनु० ११४ ७१

अधिपाणिनीय तु हरिश्चन्द्र ऋषिर्गीयते विश्वामित्रश्चैन्यन्यैव कथा चात्र संवदति।[1] क्षेमीश्वरस्तु मार्कण्डेयपुराणवद्धमेव कथानकमुपजीवन् बहूश पद्यानां भावावतार शब्दग्रहणं च विधाय चण्डकौशिकं रचितवान्।

क्षेमीश्वरेण कथानकस्य विनियोगस्तथा कृतो यथा कौशिकस्य क्रूरता राज्ञो हरिश्चन्द्रस्य च ग्रनेकनिष्ठता पुरत इव स्फुरति। अपशकुनकृतानुस्थान-प्रवयान् भाविनो निराकर्तुं कुलगुरुणा राज्ञो व्रतेन सम रात्रिजागरण निदिष्टम्। प्रातर्निद्रा-विभ्रम विरह क्लान्तोऽसौ विदूषकेण सह राज्ञी द्रष्टु गतस्ता गृहीत-मान-वैमनस्या बद्धाञ्जलि सन् प्रसादयामास। कुलपतिशिष्योपनीत शान्तिजल-माशीर्वाद चाधिगम्य राज्ञो शैव्या स्वकृता मान-चातुरीमात्मवञ्चनामेवा मन्यत।

वनेचरसूचनानुसारेण महावराहोपद्रवं प्रतिकर्तुं राजा मृगयायै वनं गत। मूर्तो विघ्नराड् विश्वामित्राद् विद्या वियोजयितुं सिद्धि च बाधितुं हरिश्चन्द्र तस्य मुनेराश्रममनयत्। राजा ता ब्रह्मविष्णुशङ्कराणा विद्या दिव्यस्त्रीरूपा विश्वामित्रेण दूयमाना रक्षार्थं विलपन्तीरपश्यत्। स ता रक्षितु मुनिं व्याक्रोशत्। तेन च क्रोधपरीतात्मा मुनिरमित्र इव विश्वस्य राजानं शापदग्ध कर्तुमुद्यत। अपराद्धमिवात्मानं मन्यमानो राजा विश्वा-मित्रेण राजकर्तव्यं पृष्टो दान रक्षा युद्धं च क्षात्रधर्ममुदघोषयत्। विश्वा-मित्रेण दानाय प्रयोजितोऽसौ निखिला वसुन्धरा मुनये दत्तवान्। एवं विहितस्य दानयज्ञस्य दक्षिणामाहर्तुं राजा त्रैलोक्यबाह्या शिवशूलस्था काशी गत।

---

१ मित्रे चर्षौ-पा० सू० ६/२/१३०
प्रस्कण्व-हरिश्चन्द्रावृषी-पा० सू० ६/१/१५३

आत्मानं विक्रेतुं राजा काश्यां वणिग्वीथी गतः। तत्र विश्वामित्रेण झटिति दक्षिणां देहीति आदिष्टोऽन्यथा शापं दास्यामीति भर्त्सित आ-सायंकालमवसरं मुनिं प्रार्थयत। न कोऽपि दक्षिणार्थं लक्षसंख्यमुद्रां दत्त्वा राजानं क्रेतुमागतः। अनन्तरं शैव्या राज्ञी पुत्रो रोहितश्च आत्मान विक्रेतु-मुपस्थितौ। अयुतपञ्चकेन तौ क्रीत्वा उपाध्यायः ( शिवस्तद्रूपधरः ) शेषार्धं धनं दानरूपेण ग्रहीतुं राजानं निवेदितवान्, किन्तु राजा नैतत् स्वीकरोति स्म। पुनरपि विश्वामित्रो राजानमुपागच्छत्। सातङ्को महीपतिश्चाण्डालवेशधरं धर्मं प्रति स्व विक्रीणीते स्म, शेषार्धं च दक्षिणायाः समर्पितवान् विश्वामित्राय। चाण्डालमपेक्ष्य स्वमेव स्वामिनं कर्तुं प्रार्थयमानं राजानं भर्त्सयामास मुनिः — "धिङ्मूर्ख ! स्वयं दासास्तपस्विनः। तत्किं त्वया दासेन मे क्रियते।"

अथ चाण्डालो हरिश्चन्द्रं दक्षिणश्मशानमधिष्ठाय शववस्त्राणि कररूपाणि दिवानिशं संग्रहीतुमादिश्य गतः। एकदा कापालिकरूपेण धर्मो वेतालेन निधिमानाय्य राजानमनृणीकर्तुं प्रास्तौत्। चाण्डालाय मम स्वामिनेऽयं निधिर्देयितेति राज्ञा स प्रत्याख्यातः। त्रिलोकीजय-शालिन्यो विद्यास्तिस्रो राज्ञो वशंवदतया समागतास्तेन विश्वामित्रमेव सेवितुं प्रेषिताः। बहूनि वर्षाणि श्मशानसेवैकनिष्ठो राजा कदाचित् सर्पदंशेन मृतं रोहितकुमारं श्मशानमानीतवतीं शैव्यां दृष्ट्वा कृतमरणसङ्कल्पोऽपि दासो नात्मघातस्याधि-कारभागिति विरतः। स राज्ञीं चापि तादृशात् क्रूरव्यवसायान्निवारयामास। शव-कम्बलं श्मशानकरं ददती शैव्या राज्ञो हस्तं कर-ग्रहण-समुद्यतं दृष्ट्वा स्वपतिं प्रत्यभिज्ञातवती। तया कृत-परित्राण-प्रार्थनया द्रवीभूतोऽपि राजा चाण्डालदासमात्मानं तत्रासमर्थं प्रत्यबोधयत्।

एवं सफल-परीक्षे राजनि स्वपुत्र-शव-कम्बलकरग्रहणे दिवः पुष्पवृष्टि-रभवत्। धर्मः प्रत्यक्षमागतः। तेन रोहितः पुनरुज्जीवितः। राजा धर्मदत्तया दिव्यया दृशा पार्वती-परमेश्वरौ शैव्या-क्रयेण धर्मं रक्षितवन्तौ उपाध्याय-दम्पती निरूप्यापूजयत्। त्यक्त-चाण्डालवेशो धर्मो रोहिताश्वं राज्येऽभिषेक्तुं राजानं च ब्रह्मलोकं नेतुमादिदेश।

मया ध्रियन्ते भुवनान्यमूनि
सत्यं च मां तत्सहितं बिभर्ति।
परीक्षितुं सत्यमतोऽस्य राज्ञः
कृतो मया जातिपरिग्रहोऽयम्॥

इति धर्मोक्त्या सत्यपरीक्षणस्य रहस्यं प्रकटितम्।

कथानक नाट्योचित निवध्नन्, सवादान् सगुम्फन् स्थाने-स्थाने लोकानुभव-महिमार्जित-सूक्ति-माला प्रतिभागुणे सग्रथ्नन् कामपि कोटिं नयति क्षेमीश्वर सहृदयाह्लादम्। तपोवन-वर्णनं तावद् हरत्येव मानसम्—

आनूल क्वचिदुद्धृता क्वचिदपिच्छिन्नस्थली बर्हिणा-
मानघ्रा कुसुमोच्चयाच्च सदयाकृष्टाग्रशाखा लता।
एते पूर्व-विलून-वल्कलतया रूढव्रणा शाखिन
सद्यश्छेदमयी वदन्ति समिधा प्रस्यन्दिन पादपा ॥२ १३

अपि च—

गोपस्कन्धे कुहरिणि शुका स्वागत व्याहरन्ति
घ्राणग्राही हरति हृदय हव्यगन्ध समीर।
एता मृग्य सलिलपुलिनोपान्तससक्तदर्भ
पश्यन्त्योऽस्मान् सचकितदृशो निर्भरान्न पिबन्ति ॥ २.१४

शिवाभ्यामविमुक्ता काशी पुण्यदा पौराणिक सदर्भानुग्राहेण वर्णिता—

विमुच्यन्ते जन्तोरिह निबिड-ससार-निगडा
शिरस्तद् वैरिञ्च न्यपतदिह हस्ताद् पशुपते।
विमुक्तस्तत्पापादमवदविमुक्त स भगवान्
न मुक्त तेनैतद् सह दयितया क्षेत्रमसमम् ॥ ३ १०

कथकार जन ऋणेन तूष्णीभवतीति प्रत्यक्षीकारयति कवि

लोकद्वय-प्रतिभयैक-निदानमेतद्
धिक् प्राणिनामृणमहो परिणाम घोरम्।
एक स एव हि पुमान् परमस्थिलोक्या
कुद्रस्य येन धनिकस्य मुख न दृष्टम् ॥३ १५

रूपकयोजनाशिल्पेन सार्धं ससारासारताविवरणं क्षणवैराग्य ददन्निर्वेद प्रोञ्छितरागमिव विदधाति चेत पट्ट सचेतसाम्—

सन्ध्यावध्याश्रयोण तनुदहनचिताङ्गारमन्दार्कबिम्ब
ताराभारास्थिकीर्णे विशदनरकरङ्कायमाणोज्ज्वलेन्दु।
हृष्यन्नक्त चरौघ घनतिमिरमहाधूमधूम्रानुकार
जात लीलाश्मशान जगदखिलमहो कालकापालिकस्य ॥४ १५

आस्तां तावदनुप्रास-प्रेमा नादसौन्दर्यं वर्ण-मैत्री-नैपुणं च निवेदयन्, क्षेमीश्वरस्य सूक्ष्मेक्षिका यथावसरं निपतत्येव दाम्पत्य-सुख-लीला-सरसी-जन्मसु विकसद्दलेषु व्यतिकर-कमलाकरेषु—

विच्छिन्नामनुबध्नती मम कथां मन्मार्ग-दत्तेक्षणा
मन्वाना सुमुखी चलत्यपि तृणे मामागतं सा मया।
नाश्लिष्टा यदलक्षिते न निभृतं पश्चादुपेत्यादराद्
यन्नास्या नव-नील-नीरज-निभे रुद्धे कराभ्यां दृशौ ॥१.१३

खण्डितामिव शैव्यां चित्रयन् कविर्हरिश्चन्द्रस्यानपराद्धस्य सूर्योपम्येन क्षेमीश्वरोऽप्रस्तुतप्रशंसां तनोति—

जलधरपटलान्तरिते यदि मानी खण्डनं गता नलिनी।
तस्या न विप्रलम्भो नोपालम्भोऽप्ययं भानोः ॥१.१६

देशकालपात्र-स्थितिमनुसृत्यैव कविर्दत्तावधानो वस्तु योजयतीति श्मशानवर्णनमेव पुनरुदाह्रियते—

विदूरादभ्यस्तैर्वियति बहुशो मण्डलशतै-
रुदञ्चत्पुच्छाग्रस्तिमितविततैः पक्षतिपुटैः।
पतन्त्येते गृध्राः शवपिशितलोलाननगुहा-
गलल्लालाक्लेदस्थगितनिजचञ्चूभयपुटाः ॥४.७

अप्रतिमाधमर्णतां नीतस्य हरिश्चन्द्रस्य सर्वशून्या दरिद्रता कविना इत्थंकारं वर्णिता येनास्या इदन्ता, ईदृक्ता, इयत्ता चेति त्रयमेकपदे शूलमिव निखातं करोति हृदि सहृदयस्य करुणरसपूर-पूरितस्य—

दाराः सूनुरिदं शरीरकमिति त्यागावशिष्टं त्रयं
सम्प्राप्तोऽवधिरद्य सत्यमपरित्याज्यं मुनिः कोपनः।
ब्रह्मस्वोपहृतं च जीवितमिदं न त्यक्तुमप्युत्सहे
किं कर्तव्यविचारमूढमनसः सर्वत्र शून्या दिशः ॥३.५

श्मशान-निहित-वैराग्य-दहनः कथमिव विवेकमुखतामेति मनः क्षणेनेति क्षेमीश्वरः क्षमते प्रकाशयितुम्—

तन्मध्यं तदुरस्तदेव वदनं ते लोचने ते भ्रुवौ
जातं सर्वममेध्यशोणितवसामांसास्थिलालामयम्।
भीरूणां भयदं त्रपास्पदमिदं विद्याविनोदात्मनां
तन्मूढैः क्रियते वृथा विपर्ययिभिः क्षुद्रोऽभिमानग्रहः ॥४.१०

अथ च वैराग्यग्रहो नायकदशामेवानुवर्तते। अहो भवितव्यता—

मामानम्रशिरोधरं प्रभवता क्रुद्धेन राज्यश्रिया
यद्विश्लेषयतापि तेन मुनिना निःशेषितं नस्त्रयम्।
तत्रापि व्यसनप्रियेण विधिना वृत्तं तथा निष्ठुरं
येनात्मा तनयः कलत्रमपि मे सर्वं विलुप्तं क्षणम्॥५ २

परन्तु अहो धैर्य-ग्रह ग्रहिलता—

चलन्ति गिरयः काम युगान्त-पवनाहताः।
कृच्छ्रेऽपि न चलत्येव धीराणां निश्चलं मनः॥४ ३५

परिवर्तिनि संसारे नास्ति नियतं स्थायि वा किंचित्—

सुखं वा दुःखं वा किमिव हि जगत्यस्ति नियतं
विवेक-प्रध्वंसाद् भवति सुख-दुःख-व्यतिकरः।
मनोवृत्तिः पुंसां जगति जयिनी कापि महता
यया दुःखं दुःखं सुखमपि सुखं वा न भवति॥४ २६

इयं प्रसन्न-गम्भीर-पदा सरस्वती कं वा न निष्णातं निर्मलतामानीय दत्त शैत्यं न विश्रमयति।

चण्डकौशिकमिति नाम्ना हारि चरितं हरिश्चन्द्रस्य तिरोहितमिव कृतं कविना। धर्मवीरस्य नायकस्यैव नामनिर्धारणं औचित्यं भजति, किन्तु कौशिकस्य चण्डतैव सर्वातिशायिनी दृष्टा क्षेमीश्वरेण। आस्तां तावद् दोषाविष्करणम्, स्तुतिभाजनतामेवार्हति नाट्यकृत् तथाभूतं धर्मवीररसमङ्गीकृत्य निबध्नन्।

## नैषधानन्दम्

क्षेमीश्वरस्य नैषधानन्दे नलस्य पौराणिकी कथा विलसति। कीथमहोदयेनास्य नाटकस्य पद्यद्वयं स्वकीये संस्कृतनाट्येतिहासे उद्धृतम्।

कृष्णमिश्रेण प्रणीतं प्रबोधचन्द्रोदय नाम प्रतीक-नाटकमश्वघोषस्य परम्परामुपजीवति।[1] एकादश्या शताब्द्या चन्देलनरेशेन दत्तात्रय कृष्णमिश्र, कविकर्मोचितं सौविध्यमलभत। कृष्णमिश्रस्य पुरस्तात् भासस्य बालचरिते, जयन्तभट्टस्यागमडम्बरे क्षेमीश्वरस्य चण्डकौशिके चापि प्रतीकपात्रयोजना-गौणत्व कल्लोलायनेस्म। अशतस्तानि नाटकानि भजातीयानि कृष्णमिश्रस्य भवेयुरुपजीव्यानि। स वीरविजयनामकमोहामृगमपि रचितवान्।

वैष्णवाद्वैतोपासक कृष्णमिश्रो भक्ति ब्रह्मलयं च विकल्परूपेण गृह्णाति—

नित्य स्मरञ्जलदनीलमुदार हार—
केयूर-कुण्डल किरीटधर हरि वा।
ग्रीष्मे सुशीतमिव वा ह्रदमस्तशोक
ब्रह्म प्रविश्य भज निर्वृतिमात्मनीनाम् ॥५.३१

सर्वथासौ जीवब्रह्मणो परमार्थमद्वैतमेवौपनिषदं हास्यं रहस्यं स्थापयति।

असौ त्वदन्यो न सनातन पुमान्
भवान् न देवात् पुरुषोत्तमात् पर।
स एष भिन्नस्त्वदनादिमायया
द्विधेव बिम्ब सलिले विवस्वत।६.२५

प्रबोधचन्द्रोदयस्य प्रस्तावनाया बीजोपस्थापना क्रियते—

विवेकेनेव निर्जित्य कर्ण मोहमिवोर्जितम्।
श्रीकीर्तिवर्मनृपतेर्बोधस्येवोदय कृत ॥।१.८

अत्र कवि स्वाश्रयदातु कीर्तिवर्मणश्चेदिनरेश-कर्णोपरि विजय स्पष्टमुद्घोषयति, व्याजेन च नाटकस्य कथावस्तु प्रक्रमयति। स्यादेतत्, प्रबोधश्चन्द्र इवोदेति, जगत्तापं शमयति, परा निवृंति गमयति, विद्याकौमुदी-

---

१ योरोपीय देशेषु Morality Play इति रूपकाणि प्रख्यातान्येव।

मुल्लासयति, अविद्यान्धतमसं द्रवयति इति औपनिषदं तत्त्वविचारं कवयन् कवीनामुच्चस्थानीय एव कृष्णमिश्रः। अभिनयसम्पदामभावेऽपीयं कृतिः प्रतिभाया नवमेव समुन्मेषं प्रकटयति। राढजनपदं बहुशः स्तुवन्नयं कविस्तद्देशजन्मा भवेदित्यनुमीयते। कृतिमेनामवगाहमवगाहं तज्ज्ञो वैदुषीं, शिल्पं, वस्तुविन्यासं, मानवप्रकृति-पर्यवेक्षणं, दर्शन-शास्त्र-निष्णातां च शेमुषीं प्रशंसति। सर्वात्मना काव्यद्वारेणात्र वेदान्तशिक्षणमेव प्रस्तुतमुपलभामहे। चार्वाक-बौद्धप्रभृतयोऽत्र पूर्वपक्षतयोपस्थापिताः क्वचित् सामर्थ्यं न जहति।

नाट्यकथानुसारेण रतिः काममुवाच–तव महाराजस्य महामोहस्य प्रतिनायको विवेक इति। कामश्च तां प्रति स्वस्य स्वसैन्यस्य लोभ-क्रोधादि-संघटितस्य प्राबल्यं प्राशंसत्। नायक-प्रतिनायकौ विमातृजौ भ्रातराविति चासूचयत्। मनसो हि उभे भार्ये प्रवृत्तिश्च निवृत्तिश्चेति। तत्र महामोहः प्रवृत्तेर्विवेकश्च निवृत्तेः पुत्रौ। उभावपि प्रभूत-सोदरौ मिथः प्रतिस्पर्धां गतौ औपनिषदात् पुरुषात् प्रबोधचन्द्रो विद्या च जन्म लप्स्येते येन महामोहस्य कुलक्षयो भवितेत्यपि कामो रतिं सूचयामास।

विवेकः तीर्थान्यधिष्ठातुं शमादीन् प्रेषयत्, तत् प्रतिकर्तुं च महामोहो दम्भादीन् सम्भावयामास। काशीं गतोऽहङ्कारो दम्भेन सह महामोहं सभाजयति स्म। स हि इन्द्रलोकाद् विवेकं विजेतुं तत्रागतः। बौद्धभिक्षूणां जैनक्षपणकानां कापालिकानां च दाम्भिकीं श्रद्धां तपोमयीं परिज्ञाय शान्तिः स्वमातरं सात्त्विकीं श्रद्धां काश्यामन्विष्यन्ती भ्रमति स्म। सा हि श्रद्धा महाभैरव्या गृहीता धर्मसहचरी आर्तनादपरायणा कथंकथंचित् परिमुक्ता।

राढादेशस्थे चक्रवर्तितीर्थे महामोहं विजिगीषुर्विवेकः कृतशिविर आस्ते स्म। अथ वस्तु-विचार-क्षमा-सन्तोषादिभिः कृतमन्त्रोऽसौ काशीमभिप्रतस्थे, गत्वा चादिकेशवस्य दर्शनेनात्मानं सम्भावयामास। अन्ततो विवेको महाराजः ससैन्यं महामोहमजयत्। तञ्च म्लेच्छदेशेषु निवस्तुं समादिशत्। महामोह-पक्षीया बौद्धाः पलाय्य सिन्धु-गान्धार-पारसीक-मगधान्ध्र-हूण-वङ्ग-कलिङ्गादिषु देशेषु शरणं गताः। विवेकपक्षीयाश्च वेदा उपवेदाः सवेदाङ्गपुराणेतिहास-षड्दर्शन-सरस्वती-प्रभृतयः सुखमवर्धन्त।

सरस्वती मनोदेवं प्रवृत्ति-पराङ्मुखं निवृत्ति-सम्मुखं च तथा चकार, यथा निवृत्तिपुत्रो वैराग्यरूपः पितरं प्राप्य तस्मै संसारस्य क्षणभंगुरतां प्राकाशयत्। अन्ते पुरुषमुपनिषदुपदिशति। पुरुषश्च प्रबोध-चन्द्रोदयं नाम पुत्रं लब्धवान्।

कृष्णमिश्रोऽनेन नाटकेन चार्वाक-बौद्ध-जैनादीन् तृणाय मत्वा वैराग्य-मोपनिषदकमुपदेष्टुमयतत। वस्तुविचार क्षमा-सन्तोषादिपात्राणि कामक्रोध-लोभादिकान् प्रध्वंसयन्ति। तत पर प्रबोधरूपेण चन्द्रोदय सम्भवतीति।

संवादमात्रप्रवणे मञ्चव्यापार-विकलेऽस्मिन्नाटके काव्यबन्धा एवाक-र्षन्ति मन। दम्भस्य प्रभावप्राचुर्ये काशी अतथाभूता लक्ष्यते—

वेश्या-वेश्मसु सीधु-गन्धिललना-वक्त्रासवामोदितै—
र्नीत्वा निर्भरमन्मथोत्सव-रसैरुन्निद्र-चन्द्रा क्षपा।
सर्वज्ञा इति दीक्षिता इति-चिरात् प्राप्ताग्निहोत्रा इति
ब्रह्मज्ञा इति तापसा इति दिवा धूर्तैर्जगद् वञ्च्यते ॥२ १

अपि बौद्धो जल्पति—

रम्या पीनपयोधरा कति मया चण्डानुरागाद् भुज—
द्वन्द्वापीडितपीवरस्तनभर मो गाढमालिङ्गिता।
बुद्धेभ्य शतश शपे यदि पुन कुत्रापि कापालिकी-
पीनोत्तुङ्गकुचावगूहनभव प्राप्त प्रमोदोदय ॥३ १८

इत्येव वर्णनासु हास्यरसोदय सुतरा प्रीणाति। निर्वेदस्यूतं वैराग्यमूल शम मात्य प्रध्नन्ती कृष्णमिश्रस्य जागर्तितरा प्रतिभा—

न कति पितरो दारा पुत्रा पितृव्यपितामहा
महति वितते संसारेऽस्मिन् गतास्तव कोटय।
तदिह सुहृदा विद्युत्पातोज्ज्वलान् क्षणसङ्गमान्
सपदि हृदये भूयो भूयो निवेश्य सुखी भव ॥५ २७

अपि च रूपकालकृता सेव वैराग्य व्यक्ति-वाणी रस्यते—
मृत्युर्नृत्यति मूर्ध्नि शश्वदुरगी घोरा जराल्पिणी
त्वामेषा ग्रसते परिग्रहमयैर्गृध्रैर्जगद् ग्रस्यते।
भुत्वा बोधजलैरबोधबहुल तल्लोभजन्य रज
सन्तोषामृतसागराम्भसि मनाङ् मग्न सुख जीवति ॥४ २३

सानुप्रासप्राशा अपि काश्चिदुक्तय सौष्ठवमध्य पुष्णन्ति माधुर्यं वहन्ति च प्रसादम्—

श्रियो दोलालोला विषयज-रसाः प्रान्तविरसा
विपद्गेहं देहं महदपि धनं भूरिनिधनम् ।
बृहच्छोको लोकः सततमबलानर्थबहुला
तथाप्यस्मिन् घोरे पथि बत रता नात्मनि रताः ॥ ५.२४

अत्रेदं विचित्रमिव प्रतीतिपथमवतरति, यत् कविः समग्रामपि वैदिकीं धारां प्रत्यावर्त्य स्त्रीनिन्दां विशेषतो वर्ण्यतां नयति। प्रव्रज्याशरण एवासौ दृश्यते गार्हस्थ्य-विनिन्दकः। नेदं खलु उपनिषदपि समर्थयति।

सम्मोहयन्ति मदयन्ति विडम्बयन्ति
निर्भर्त्सयन्ति रमयन्ति विषादयन्ति ।
एताः प्रविश्य सदयं हृदयं नराणां
किं नाम वामनयना न समाचरन्ति ॥१.२७

इत्यहो वाराङ्गनामयमिव पश्यति कविरङ्गनालोकमखिलम्। सम्मोहनं नारीणां वैशिष्ट्यं येन वशीकृतः पुमान् गार्हस्थ्यप्रमोदामृत-कुल्यां मन्यमानः सन्तानतन्तुमविच्छिन्नां तनोति। कृष्णमिश्रदृशा तु बौद्ध-वैराग्यमेव जयति इति स्ववचोव्याघात इवापद्यते—

मुक्ताहारलता रणन्मणिमया हैमास्तुलाकोटयो
रागः कुङ्कुमसम्भवः सुरमयः पौष्पा विचित्राः स्रजः ।
वासश्चित्रदुकूलमल्पमतिभिर्नार्यामहो कल्पितं
बाह्यान्त. परिपश्यतां तु निरयो नारीति नाम्ना कृतः ॥८.९

आस्तां तावत्। वीररसोचितां संघटनां योजयन् कृष्णमिश्रः स्तुति-मर्हत्येव—

उद्धूत-पांसुपटलानुमितप्रवन्ध—
धावत्खुराग्रचयचुम्बितभूमिभागाः ।
निर्मथ्यमानजलधिध्वनिघोरहेष—
मेते रथं गगनसीम्नि वहन्ति वाहाः ॥४.२६

अस्त्यत्र कश्चिद् वाग्विशेष आवर्जयन् सहृदयानां हृदयानि युद्धोद्योग-वर्णनेऽतितरां रम .ति—

सज्जयन्ता कुम्भभित्तिच्युतमदमदिरामत्तभृङ्गा करीन्द्रा
युज्यन्तां स्यन्दनेषु प्रसभजितमरुच्चण्डवेगास्तुरङ्गाः ।
कुन्तैर्नीलोत्पलाना वनमिव ककुभान्तराले सृजन्त
पादाता संचरन्तु प्रसभमसिलसत्पाणयोऽप्यश्ववारा ॥८ २५

गौडीया रीति निर्वोढु न तावत् तथा प्रौढिमान भजति कविर्यथा वैदर्भीमिति निर्विवादम् । यथा—

अन्धीकरोमि भुवन, बधिरीकरोमि
धीरं, सचेतनमचेतनता नयामि ।
कृत्य न पश्यति, न येन हित शृणोति
धीमानधीतमपि न प्रतिसन्दधाति ॥२ २१

कामवशात्व क्रोधवशात्वं वात्र चलच्चित्रमिव सजीवं प्रतिमानिर्माणमिव तन्मयतामादधाति । यथा वा भर्तृहरिस्वरमनुस्वनन् गायति कवि —

फल स्वेच्छालभ्य प्रतिवनमखेद क्षितिरुहा
पय स्थाने-स्थाने शिशिरमधुर पुण्यसरिताम् ।
मृदुस्पर्शा शय्या सुललितलतापल्लवमयी
सहन्ते सन्तापं तदपि धनिना द्वारि कृपणा ॥४ १६

कृष्णकवे परिहास नैपुणी यथोचित राजते । पापण्डवितृष्णावसरेषु अस्य कलम सचित्रं विभाति । तथा हि—

निहतस्य पशोर्यज्ञे स्वर्गप्राप्तिर्यदीष्यते ।
स्वपिता यजमानेन तत्र कस्मान्न हन्यते ॥२ २०

इति चार्वाकाणा यज्ञनिन्दा निबद्धा । अथ श्राद्धनिन्दा यथा—

मृतानामपि जन्तूना श्राद्ध चेत् तृप्तिकारणम् ।
निर्वाणस्य प्रदीपस्य स्नेह संवर्धयेच्छिखाम् ॥२ २१

व्यास-गिरा निबद्धानि ब्रह्मसूत्राणि प्रति कवेर्महती श्रद्धा वर्णिता—

विपुलपुलिना कल्लोलिन्यो नितान्तपतज्झरो
मसृणितशिला शैला सान्द्रद्रुमा वनभूमय ।
यदि शमगिरो वैयासिक्यो बुधैश्च समागम
क्व विशितवसामद्यो नार्यस्तया क्व च मन्मथ ॥

अत्राप्यसौ नारीं प्रति जुगुप्सा-जम्बालमेव क्षिपति। अपत्यानि वात्सल्य-लालितानि च कीटरूपाण्येव दवपथमायान्ति वैराग्य-दप्तमनसः प्रदीप्त-निर्वेदस्य। यथा—

प्रादुर्भवन्ति वपुषः कति वा न कीटा
यानन्यतः खलु तनोरपसारयन्ति।
मोहः स एष जगतो यदपत्यसंज्ञां
तेषां विधाय परिशोषयति स्वदेहम् ॥५.२१

युगपदेव क्रोध-विभीषणस्य क्षमावीरस्य च वर्णनं सर्वथा मनोहरं प्रतिभाति। यथा—

क्रोधान्धकार - विकट - भ्रुकुटी-तरङ्ग-
भीमस्य साध्य किरणारुण-रौद्रदृष्टेः।
निष्कम्प - निर्मल - गभीर - पयोधि-धीरा
वीराः परस्य परिवाद-गिरः सहन्ते ॥४.१५

कविदृशा वाता अपि शैवा इव काशीं त्रैलोक्यपावनीं सेवन्ते—

तोयार्द्राः सुरसरितः सिताः परागै—
रर्चन्तश्च्युतकुसुमैरिवेन्दुमौलिम् ।
प्रोद्गीतां मधुपरुतैः स्तुतिं पठन्तो
नृत्यन्ति प्रचललताभुजैः समीराः ॥४.२८

## भगवदज्जुकीयम्

इदं भगवदज्जुकीयं नाम प्रहसनं कस्य कौशलमिति न सुनिश्चत-मद्ययावत्। बोधायनो नामासावित्यपि न सन्देह सीमानमत्येति। आसीदसौ सांख्य-योगदर्शनयोः सुतरामधीतीति तत्कृतिरेव प्रमाणम्। महेन्द्रविक्रम-वर्मणा मत्तविलासप्रहसनं सप्तम्यां शताब्द्यां विरचितम्। तदेव प्रथमं विदितं सम्मतञ्च प्रहसनमुपलब्धमद्य यावत्।[1] अतः परमेव भगवदज्जुकीयं ग्रथितं भवेत् लटकमेलकं च द्वादश्यां शताब्द्यां प्रणीतमिति ततः पूर्वमेव शैलीदृष्ट्या भगवदज्जुकीयमायाति। एवञ्च एकादशी शताब्दी रचना-कालोऽस्य भवेत् इत्यनुमानम्।

१. अयमेव महेन्द्रवर्मास्य प्रहसनस्यापि लेखक इति राघवन् रंग २ पृष्ठे ८४, ८७ निर्दिशति।

अस्य प्रस्तावनाया कतिपये व्यतिकरा वैशिष्ट्यमावहन्ति । यथा—सूत्रधारो विदूषकमाह् वयति न नटीमिति । नाट्यरसेषु हास्यस्य प्राधान्य निगदितमिति च । अस्यावतार-काले प्रहसनस्य हास्य लोकप्रियताया परा कोटिमभजदिति प्रतीयते ।



कथानकमस्य द्विधा विभक्तमिव विभाव्यते । प्रथमे भागे आचार्य-शिष्ययो सवादा न तथा हासमुज्जृम्भयन्ति यथा द्वितीयभागे गणिकाप्रसङ्गे शिष्यवैद्यादीना यत्र हास्यरस उच्चतमा काष्ठामाटीकते । गणिका, वसन्तसेना, नायकयोरुद्याने विहार, कस्मैचित् कालाय नायिकामरणं परिव्राजकेन पुन-रुज्जीवनम्, अन्ते च सुखद ,सयोग इति तत्त्वानि मृच्छकटिकादेव गृहीतानि प्रतिभान्ति । अपि च मृच्छकटिके योजिता प्रासङ्गिका एव हास्यावतारा अत्र प्राधान्यमाकलयन्ति । आचार्यशिष्योऽत्रार्धविदूषक एव । अय हि न जठरेण बुभुक्षापर इति, जात्या ब्राह्मण इत्येवापितु स्वभावेन रिरसा-स्यूत मानसोऽपि दृश्यते । चरकाणा सुश्रुताना चात्र देशे भारते तथाभूतास्तृणवैद्या अपि भवेयुर्ये चिकित्सावृत्तिका अपि विचिकित्सालम्बनतामेव भजन्ति इत्येवमादि उपादायात्र प्रहसने हास्य सृष्ट, यदुपजीव्य परवर्तीनि हास्यनाट्यानि रचि-तानि । यमदूताना पात्रस्य योगक्रियया परदेहप्रवेशश्च हासमुत्कर्पयत । न केवलं सवादा एव गल्ल फुल्लनादिभि प्रयुक्ता अपि मचव्यापारा अपि हास्यमनुरुध्य योजिता इति भगवदज्जुकीय कामपि प्रत्यग्रता परिदधाति । इदमुद्दिश्य विण्टरनिट्ज महाभागेनापि सत्यमुक्तम्—न पात्राण्येवापितु सर्वोऽपि प्रयोगो हासोत्तेजक इति ।

भगवदज्जुकीयकथानुसारेण उदरभरि शाण्डिल्यो ब्राह्मण उदर पूरणाय बौद्धो भिक्षु सवृत्त । एकाहारा भिक्षव इति तस्य जठरानलो न शमित । तद् बौद्धचर्या परिहायासौ परिव्राजकाचार्यस्य शिष्यतामनुगृह्य तज्झोलिका-वहन-कर्मण्यारमान नियोजयति स्म । अकारण-धृत-मत्सरोऽसौ गुरु दुष्टाचार्य इति सज्ञाये चिन्तयति अय दुष्टप्रव्रज्यापर क्वचित् प्रातराश भिक्षा हृत्वापितु गत इति ।

एकदा शाण्डिल्यो गुरु भिक्षाटन-विधिमपृच्छत्, गुरुश्च त प्रत्यवोचत्—

> अमानकाम सहितव्यघर्षण
> कृशाजनाद् भैक्ष कृतात्मधारण ।
> चरामि दोषव्यसनोत्तर जगद्
> हृद महाग्राहमिवाप्रमादवान् ॥

भोजनमात्रप्रयोजनकोऽहं भवन्तं शरणं प्रतिपन्नो न धर्मकर्माणि अनुष्ठातुमुत्सहे, इति भिक्षार्थमेव प्रेरितो गुरुरुवाचेति—नैवं प्रभातायामेव रजन्यां भिक्षायै अटन्ति। अस्मिन्नशोकोद्याने विश्रम्य तावत् विलम्बनीयमिति।

अथ तयोर्विवादोऽवर्धत—कः पूर्वमुद्यानं प्रविशेदिति। पत्रपल्लव-निगूढाद् व्याघ्राद् भयमाकलय्य शाण्डिल्यो नैव पूर्वं प्रवेष्टुमुदसहतेति गुरुरेवोद्यानं प्राक् प्राविशत्। अनुप्रविशन्नेव शिष्यो मयूर-धृतपादो व्याघ्रेण गृहीतोऽस्मीत्युच्चैः क्रन्दति स्म। रोदनाकृष्ट-दृष्टिराचार्यो व्याघ्रशंका न्यवारयत्। अथोन्मीलितलोचनः शाण्डिल्य आत्मानं बहुमन्यमान इवावदत्—अरे मामुन्मीलितदृशं समीक्ष्य व्याघ्रो मयूरत्वं गत इति। योगेन विभूतीनामणिमादीनां सिद्धिर्भवतीति गुरुणा मुहुः प्रलोभितोऽपि स स्वोदरपूजासङ्कल्पात् न विचलितः। गुरो, भवानेव चित्तवृत्तिनिरोध-विकटं नाटकमिदं घटयतु। अहं तावद् भोजन-विहार-परमानन्दं प्रति यते इत्युवाच।

अत्रान्तरे वसन्तसेना नाम गणिका विटेन रंस्यमाना चेट्या सहोद्यानं प्रविवेश। पुष्पावचयं कुर्वन्ती तां यमदूतः सर्परूपोऽदशत्। मृतां तां समालोक्य शिष्यस्तया सहरमणं कामयते स्म। बाधमानं गुरुमसौ सहस्रशोपभाष्य 'अकरुणस्त्वं निःस्नेहः कर्कशहृदयो दुष्टबुद्धिर्मुधा मुण्डोऽसि, य एवं कदर्थयसि वैराग्यपरायणामस्मादृशीमेव संन्यास-व्रतधारणीं निष्कामामिमां तपस्विनीमिति। वचनवज्रैः प्रताड्य च तं वेश्यातः दूरयति स्म। शिष्यश्चासौ प्रणयपथे तां जीवितामेव मत्वा स्पर्शानन्देनात्मानं कृतकृत्यं संभावयामास। चेटी च तमेव शवरक्षापरं निभाल्य वसन्तसेना-मातरमानेतुं गता। अथाचार्यः शिष्यं प्रति योगमहिमानं दर्शयितुकामो गणिकाशरीर आत्मानं प्रवेश्य तस्यां प्राणान् सञ्चारयामासेति सा पुनर्जीविता वेश्या-व्यवहारं विहाय परिव्राजकवदाचरति स्म। प्रथमं तावदसौ शाण्डिल्यमेव स्वं स्पृशन्तं भर्त्सयामास—अप्रक्षालितपाणिपादस्त्वं मा मां स्पृशेति। आयाहि स्वाध्यायमाचरेति। तथा कृतादेशः शाण्डिल्यो विस्मयापन्नो गणिकासविधेऽपि पठनीयमेव चेद् वरं गच्छामि पुनराचार्यशरणमिति मनसि निधाय यावद् गतस्तावदाचार्यस्य मृतं शरीरमेव दृष्ट्वा, किमाचार्यसदृशा बहुज्ञा अपि मरण-व्यसनपरा भवन्तीति विषीदति।

अथ वसन्तसेनाया माता चेटी च तत्रागत्य तां सुस्थां सजीवामपश्यताम्। गणिकया च वृषलवृद्धे! मा मां स्पृश इत्युक्ता माता सर्प-विषकृतमुपद्र-

वमेव तत्र कारणं मत्वा वैद्यमानेतु चेटी प्रस्थापयामास। अत्रान्तरे वसन्त-सेनाया विट आगत्य साश्चर्यमपश्यत् प्रणयिनी वस्त्रमपि स्प्रष्टुं स्वं निवार-यन्तीम्। असौ च ता पिशाचगृहीताममन्यत। अथ चिकित्सक सर्पविष-निरसनाय शिरावेधं कर्तुमुद्यत-कुठारोऽभवत्। तदा वसन्तसेनाक्रोशात्—वैद्या-पसद, अल परिश्रमेणेति साक्षेप वारित। त्रिदोषौषध-वटिका-समाहरण-व्याजेनापसृतो वैद्य।

अथ समाप्तायुषोऽन्याया वसन्तसेनाया स्थाने शेषायुषोऽस्या गणिकाया नाम व्यामोहेन हरणं कृतवान् यमदूतो यमलोके प्राप्तभर्त्सनं परावृत्य दाहात् पूर्वमेव ता जीवयितु धृतकल्पो यावदिह ता जीवितामेव पश्यति तावदव-धानेन आचार्य-कृत-प्राण-सञ्चारव्यतिकरं ज्ञात्वाचार्यशरीर एव वसन्त-सेनाया प्राणान् प्रवेश्य पलायाचक्रे। तत्र आचार्योऽपि पुनर्जीवितो गणिकाभावं गतो विटमाहूय शृङ्गारं नाटयन् मद्यमानेतुं तं समादिदेश। पुनरागत वैद्यमा-चार्यं केन सर्पेण दष्टास्मीति पृष्टवान्। व्याकरणसर्पेणेति वैद्य उवाच। आचार्येण विडम्बितो वैद्य पलायित[illegible]।

अन्ततो यमदूत एव ता[illegible]दु स्थिति समाधाते [illegible]मो आचार्यमुवाच-किमिह भवान् वेदवेदाङ्गविद्[illegible] वृषन्या अस्या शरीरे [illegible]। इदं विहाय स्वशरीरमेव सनाथ करोतु इति। एवं पुन प्राणविनि[illegible]भौ यथावस्थौ संजातौ।

भगवदज्जुकीयस्य न कथानकमेवापि तु क्वचित् सवा[illegible] अपि भूयो हासमवतारयन्ति। यमदूतोऽप्यत्र गणिकारसिको वदति—

श्यामा प्रसन्नवदना मधुरप्रलापा,
मत्ता विलासजघना वरवल्कलार्द्राम्।
रक्तोत्पलाभनयना नयनाभिरामा,
क्षिप्रं नयामि यमसादनमेव बालाम्॥

लघुन्यपि कथायोजने उपमालङ्कार क्वचिदर्थमोऽप्यत्र तत्रोऽप्येव—

यदा तु सङ्कल्पितमिष्टमिष्टत
करोति कर्मावहितेन्द्रिय पुमान्।
तदास्य तत् कर्मकृन्त सदा सुरै
सुरक्षितो न्यास इवानुपाल्यते॥

सरलसरलमनुप्राससामञ्जस्यमञ्जसा व्यञ्जयति नैपुणम्—

वृन्दावन-कान्यकुब्ज-प्रयाग-काशिक्षेत्रेषु पर्यटन्नसौ सेतुबन्ध सोमनाथं दृष्ट्वात्मानं सनाथयन् राज्ञो काव्यामृतं पाययन् गुर्जरेषु-कर्णनृपतेः सभायां वसन् कर्णसुन्दरी नाम नाटिकां व्यरचयत् प्रायेण १०७५० ई० वर्षे। तदैव कर्णः (१०६४-१०८४ ई०) गर्जनवंशयान् राज्ञः सिन्धुतटे विजित्य-गजनकाधिराजपदवीं लभते स्म। अस्या नाटिकायाः प्रथमोऽभिनयप्रयोगोऽणहिलपत्तने यात्रामहोत्सवावसरे प्रातः सपेदे। कर्णस्य राज्ञा महामात्येन सपत्करेणाय यात्रामहोत्सव प्रवर्तितो बभूव।

अत्र कथानुसारेण बिल्हणेन स्वाश्रयदातुः कर्णस्यैव नायकत्व प्रतिष्ठाप्येयं नाटिका रचिता। अत्र कर्णसुन्दरी नाम विद्याधरकन्या नायिकात्वेनोपनिबद्धा। नाट्यकृत् स्वमेव इतिवृत्तसार वर्णयति—

विद्याधरेन्द्रतनया नयनाभिरामा—
लावण्यविभ्रमगुणा परिणीय देव।
चालुक्यपार्थिव-कुलार्णव — पूर्णचन्द्र
साम्राज्यमत्र भुवनत्रयगोतमेति ॥११३

उदयनस्य योगन्धरायण इव कर्णस्य मन्त्री सत्पकुरः कर्णेन लीलावने दृष्टा महिष्या सह राजकुले वसन्ती स्वर्गादवतीर्णा कामपि ललना कर्णसुन्दरी नाम राजोपयच्छेदिति प्रायतत। लीलावने विदूषकद्वितीयो राजा तस्यास्तिरश्चीनैः कटाक्ष-सायकैरन्तराविद्ध इव विदूषकाय स्वप्नवृत्त निवेदितवान्—

'मम विरह-क्लान्त कलेवरा कापि अङ्गना मूर्च्छं मूर्च्छं पाशबन्धेन स्वजीवनान्त चिकीर्षु मयाश्वासिता। सम्प्रति जाग्रतो मयि क्व गतेति।' स्वप्ने प्रलपन्तं राजानं विज्ञाय कोपना महिषी सुतरामकुप्यत। अथ विनोदाय मदनोद्यानं गतो राजा तस्या एव ललनाललामभूतायां आलिखिता प्रतिकृतिं दृष्ट्वावदत्—

संवोन्मज्जत्कनक-कलशप्रेक्षणीयस्तनुश्री—
मूर्तित्रैलोक्य-विजयिनी राजधानी स्मरस्य।
एतच्चक्षुस्तदपि विदलत्केतकी पत्र-मित्रम्
छाया सेयं नियतमधरे विद्रुमोल्लेख-मुद्रा ॥१५३

अथ सहसा समागता राज्ञी स्वसंरक्षिता कर्णसुन्दरी तत्रालिखिता राज्ञा दर्शं दर्शं प्रशस्ता च लक्षित्वा कुपिता सती ततो विनिर्गता। तत्रश्चरण-

पतनावधिर्मानो महिष्या निवारितः किन्तु राजा नाशङ्कोत् कर्णसुन्दरीं मनसो विदूरयितुं नाशक्नोत् ।

राजा मनोविनोदाय लीलावनं गतः केलीकमलिनी-कुञ्जे कर्णसुन्दरी-ममिलत् । सख्या सह लतागुल्मं गताया आलापान् श्रोतुं राजानुसृत्य तां पूर्वराग-संतप्त-मानसां मूर्छितां स्पृष्टवान्, विनिद्रनयनां च तत्सविधे समासीनो यावद् वार्ता-सुखं लभेत तावदेव कर्णसुन्दरीमन्विष्यन्ती महिषी समागता । तौ पलायितौ ।

अथ राज्ञी राजानं वञ्चयितुं सचेष्टा बभूव । सा स्वयं कर्णसुन्दरीवेषा स्वसखीञ्च तत्सखीं वकुलावलीं कृत्वा तद्दत्तसङ्केतस्थले समागतं राजानं छद्माभिभूतमकरोत् । आलिङ्गनकाले महिषी स्वरूपेण-प्रकाशं गता चरण-पतितं तं विहाय निःसृता ।

अथापरस्यां कपटनाटकरचनायां वञ्चिकैव वञ्चिता । कर्णसुन्दर्याः स्थाने कपट-स्त्रियं स्वभागिनेयं विधाय सा विवाहमायोज्य राजानं वञ्चयितु-मयतत । किन्तु अपरे परमार्थां कर्णसुन्दरीमेवानीय यथाविधि विवाहं रचितवन्तः । कपटनाटकस्य महिमा हिमान्यामिवानलकणो लुप्यति स्म क्षणेन ।

रचनाकाल एव ख्यातं नायकं कर्णं गर्जन-नगरजेतारं निवध्नतीयं नाटिकेतिहासाध्येतॄणां कृते सविशेषमुपयुज्यते । यथा तत्रैव गीयते स्म—

> वातारं जगतां विलोल-वलय-श्रेणी-कृतेकारवं,
> सोन्मादामर-सुन्दरी-भुजलता-संसक्त-कण्ठग्रहम् ।
> कृत्वा गर्जनकाधिराजमधुना त्वं भूरि-रत्नाङ्कुर–
> च्छाया-विच्छुरिताम्बुराशि-रशना-दाम्नः पृथिव्याः पतिः ॥४.२२

नाटिका-नियमान् विगणय्य विल्हणः पद्यैः पुष्कलैः सहृदयान् रञ्ज-यन्निवात्र भूयोऽवतरति । अङ्केषु कार्यव्यापाराभावोऽपि पद्य-संवाद-परता-मेवास्य पुरस्करोति । हर्षस्य रत्नावल्या राजशेखरस्य विद्धशालभञ्जिकायाः कर्पूरमञ्जर्याश्च भावच्छाया अप्यत्र सुलभा एव । पद्यानां गेयत्वं सर्वत्र श्रुतिरसायनतां दधाति—

> 'यत् तारारमणोऽपि निर्वृतिपदं नास्याश्चलच्चक्षुषो
> यद् गात्रं शतपत्र-पत्र-शयनेऽप्युत्फालमुद्वेल्लति ।

शीत यच्च कुचस्थलीमलयज धूलीकदम्बायते
किं वा यत् तदनङ्गमङ्गलमयो भङ्गो कुरङ्गीदृश ।२१

अनुप्रासयोजना विप्रलम्भमनुनृत्यन्तीव पुरोधावति। प्रत्यग्रता चार्थ-योगस्य कामपिच्छाया बिभर्ति प्रत्यूषे विहग-कुल-कलरवस्येव । यथा—

धूर्तोऽय सखि बध्यतामिति विधु रश्मिस्रजे कर्षति
ज्योत्स्नाम्भ परत प्रयात्विति रिपु राहु मुहुर्याचते ।
अप्याशङ्कति सेवितु सुवदना देवं पुरद्वेषिण
भूयो निग्रह वाञ्छया भगवत भृङ्गारचूडामणे ॥ २१६

कञ्चनावली महिषी कर्णसुन्दरी मत्वा राजा स्तौति—

जयति धनुरधिज्य भ्रू विलास स्मरस्य—
स्फुरति किमपि जैत्र तेऽस्यमरुणो प्रचार ।
अपि च चिबुकचुम्बी श्यामनाभ्यास्तनोति
स्तनकलश निवेश मेखलभो पृथुत्वम् ॥ २२०



## रामचन्द्रस्य नाटकानि

रामचन्द्रो हेमचन्द्रशिष्यो नलविलास, सत्यहरिश्चन्द्रं, रघुविलास, यादवाभ्युदयं, राघवाभ्युदयं च नाटकानि, निर्भयभीमं व्यायोग, कौमुदीमित्रानन्द, मल्लिकामकरन्द, रोहिणीमृगाङ्क चेति प्रकरणानि, वनमाला नाटिका चारचयत् ।

गुर्जराधीश्वर सिद्धराजो जयसिंहो (१०९४-११४२ ई०) हेमचन्द्र 'कट्टारमल्ल' इत्युपाधिना भूपितवान् । रामचन्द्राभ्युदयस्तत्पुत्रस्य कुमारपालस्य (११४३-११७२ ई०) राजत्वे परा कोटिं गत । तदनन्तर च जैनविरोधी जयपालस्त तथा दु खाकरोति स्म यत् ११७२ ई० वर्षे स मृत । अतएव खीष्टस्य द्वादशी श ताब्दी रामचन्द्रस्योदयकालो निश्चित एव ।

असौ रामचन्द्र आत्मान प्रबन्धशतकर्तार घोषयति । अद्यत्वे सप्तचत्वारिंशद् ग्रन्था तेन रचिता लभ्यन्ते । ते च रूपकाणि काव्यानि स्तोत्राणि शास्त्रग्रन्थाश्च सन्ति । तत्प्रणीताना रूपकाणामेकादशाना षडेव प्राप्यन्ते, त्रयाणा चोल्लेखा एव तस्य नाट्यदर्पणे विद्यन्ते । कुमारविहारशतकमिति काव्यम्, सप्तविंशति स्तोत्राणि तीर्थकराणामुपलभ्यन्ते । हैमबृहद्वृत्तिविन्यास इति शास्त्रग्रन्थस्तन्महिमान प्रकाशयति । असौ गुणचन्द्र विदुषा सहायेन द्रव्यालंकारं नाट्यदर्पण च रचितवान् । स्वभावतस्तस्य स्वातन्त्र्यन प्रियता नलविलासे स्पष्टीभवति तथाहि ।

> स्वातन्त्र्य यदि जीवितावधि, मुधा स्वर्भूर्भुवो वैभवम् ॥२ २
>
> अनुभूत न यद्येन रूप नावैति तस्य स ।
>
> न स्वतन्त्रो व्यथा वेत्ति परतन्त्रस्य देहिन ॥६ ७॥
>
> यशोभिरनिश दिशं कुमुदहासभास सृज— -
>
> प्रजातगणना समा परमत स्वतन्त्रो भव ॥

परानुहरणेन काव्यरचना नास्मै स्वदते । तन्मतेन नास्ति कुमुदाना विकास कथमपि चन्द्रोदयपराधीन , लोको यथा वा तथा वा वदतु—

अमावस्यायामप्यविकलविकासीनि कुमुदान्यय लोकश्चन्द्र व्यतिकरविकासीनि वदति ॥

संयमं तृणीकृत्य चरन्त्यास्य लेखन्या ब्राह्मणेषु स्वैरं मषीनिपातः कृतः —

"अहो सर्वातिशायी द्विजन्मनां निसर्गसिद्धो लोभातिरेको यदयमन्त्येऽपि वयसि वृथा वृद्धो निधन-धन परिग्रहान्न विरमति।"

अपि चायं तीर्थस्वांक्षान् प्रति वाचाटतामूरी करोति—"परवञ्चनव्यसनिनः काशीवासिनः श्रूयन्ते।" नैतत्सर्वं तस्यौदात्यानुरूपम्।

## नलविलासम्

सप्ताङ्के नाटके नलविलासे नल-दमयन्त्योर्महाभारतीया कथा किञ्चिन्नवीभूता विलसति। विदर्भाणा राज्ञो भीमस्य दुहितरं दमयन्तीं चेदीनां कलचुरिनरेशः कामयमानः कापालिकरूपेण चरं भीमाय प्रेषयति स्म। तत्प्रभावेण च भीमोऽपि तस्मै कन्यादानं निश्चितवान्। अथैकदा सूर्यवने नलः सूर्यमुपस्थाय विदूषकेण सुहृदा कलहंसेन च सार्धं नैमित्तिकाय गत्वा स्वप्नं न्यवेदयत्—प्रातरवलोकिते स्वप्ने परिहिता मुक्तावली मम कण्ठात् पतिता पुनर्धृता च कान्तिं मे द्विगुणयामासेति। नैमित्तकश्चानन्दकरस्य स्त्रीरूपस्य सबाधां प्राप्तिं स्वप्नफलमिति प्रत्यवदत्। नातिकालानन्तरं तत्र लम्बोदरं नाम कापालिकमागतं नल आलापादिना छद्मपरायणं चरमजानात्। विदूषकेण सह कलहायमानस्य तस्य लम्बोदरस्य कक्षात् पतितायाः पुटिकायाः कलचुरिनरेशं प्रति लिखितं पत्रमनुपमसुन्दर्याश्च चित्रं प्राप्तम्। राज्ञो दासी मकरिका नाम कुण्डिनपुर-वास्तव्यासीत्। सा तच्चित्रं दमयन्त्या इति सूचयामास। नलः स्वस्य दमयन्त्याश्च चित्राभ्यां सह सखायं कलहंसं दासीं च मकरिकां प्रणयपथं समञ्जसयितुं प्रेषितवान्।

ततो निवृत्तः कलहंसो राजानमसूचयत्—स्वसम्बन्धिनां द्वारेण मकरिका दमयन्तीं मिलित्वा तस्यै नलं वर्णितवती। मां च भिषग्रूपेण तत्रानयत्। दमयन्ती तस्याः सकाशान्नलस्यं चित्रं प्राप्य देवतागृहे स्थापितवती, स्वस्य च तामेव प्रतिकृतिं चित्रं प्रेषयामासेति। घोरघोणो नाम कापालिकश्चित्रसेनाय दमयन्तीं दातुं भीमं बद्धप्रतिज्ञमकरोत्। तस्माद् घोरघोणभार्या लम्बस्तनी स्वपक्षे नेया, येन सा भीममस्माकं पक्षे प्रवर्तयेत्, सुतां नलाय दापयेच्च। कलहंसेन सहैवायाता नलेनाभ्यर्थिता लम्बस्तनी अपुत्रेभ्यः पुत्रदायिनीं जारजभ्रूणानां पातयित्रीमात्मानं सर्वं कर्तुमन्यथा कर्तुं च शक्तां घोषयित्वा दमयन्तीं नलाय प्रापयितुं प्रतिज्ञातवती।

सम्पन्ने स्वयंवरे, उदूढाया दमयन्त्या नलेन खरमारोहितेन घोरघोणेन, नलस्य युवराज कूबरमभिसन्धाय कारिते दुरोदरे हारितसर्वस्वो नायको स्वराज्यान्निर्वासितो दमयन्ती-सद्वितीयो वनमधिवस्तु गत । दमयन्ती च वनप्रवासव्यसन स्वपित्रे निवेदयितु मकरिका प्रेषयामास। विपदि चास्या दम्पती विवेदर्भानेव शरण लब्धवन्तौ। एकदा विपिने पिपासातुरायै दमयन्त्यै जलमन्वेष्टु गत नल रचितकपटाभासो लम्बोदरो घोरघोणाशिष्य कृतसन्यासिवेष श्रुतसकलवृत्तान्तो भ्रमाकुलमति कृतवान् यत् व्यसनोपहतेन भवता श्वशुरकुल नाश्रयणीयमिति । प्रत्यावृत्त पतिमन्यमनसमिवावलम्ब्य शङ्काकुला दमयन्ती निद्रालुश्च शाटिकया तमाबध्य सुप्तवती। अर्धच्छिन्नवस्त्रो नल ता वने विसृज्य कोशलान् प्रति प्रस्थित । मार्गे सर्परूपधरो नलस्य पिता पुत्र यथाकाम विद्रूपमकरोत्। पश्चात् सोऽप्रत्यभिज्ञात एव कोसलाधीश्वरस्य दधिपर्णस्य सेवाया बाहुक इति नाम्ना नियुक्त ।

अथैकदायोध्याया समागता नटा नलदमयन्त्योरूपाख्यानमभिनयन्ति स्म। तथा हि परित्यक्ता दमयन्ती वणिजा सार्थवाहेन सगता। मार्गे सा पाशबन्धेन स्व हन्तु कृतमति सार्थवाहानुचरै रक्षिता। कथं कथमपि विदर्भान् सोपागता इति नाट्यकथादर्शनावसरे बाहुकस्य चेष्टा पर्यवेक्ष्य दधिपर्णस्त नल ज्ञातवान्। अत्रान्तरे विदर्भेभ्यो दूतेन श्वस्तन एव दिने दमयन्त्या स्वयवर इति दधिपर्णो निमन्त्रित । कथकार तत्र यतात्येन समयेन प्राप्तव्यमिति चिन्तापर कोसलेश नलो निजसारथित्वेन समीहितमाश्वासयामास। सोऽभिमन्त्रित रथ वायुवेगेन कुण्डिनपुरमनयत्। नलो विदर्भेषु शोक परिव्याप्तराजकुला राजधानीमपश्यत्। स ब्राह्मणमुखाद् दमयन्त्या करिष्यमाणमारमदाह श्रुतवान्। कृतमरणनिश्चया दमयन्ती नल प्रोवाच—सरमे दुष्कृतिने मृत्युर्न वरणीय । एवमुपादशन्नलस्तया—किमय पाप प्रलपतीति भर्त्सित.। तदा नल आत्मान पूर्वावस्थ प्रकटयन्नवदत्—

> येनाकस्मात् कठिनमनसा भीषणाया कराल—
> व्यालाया त्व वनभुवि हतेनातिधेयीकृतासि।
> निर्लज्जात्मा विकलकरणो विश्व-विश्वस्त घाती
> पश्यामास सरसहृदये देवि सोऽय नलोऽस्मि॥७८

दम्पतीमिलन पुनरजायत।

सन्नपि जैनाचार्यो रामचन्द्रो महाभारतादे कथावस्तूनि यथावदुपादाय क्वचिदेव जैनाभिषङ्ग दधानो नाट्यमर्यादा ऊरीकरोति निर्वाहयति च। दर्शकाना कौतूहलवृत्ति किमग्रे किमग्रे इति विचिन्वती आफलागम नयात तून्

सूचयता तदेकमयतां सन्धत्ते। वृथा विस्तरैः कथानकं प्रायेण दुर्व्यूहमेव दृश्यते। भूयसा गुम्फितेषु पद्येषु कतिपयान्येव मनोहारितां भजन्ति—

सौदामनी-परिष्वंगं मुञ्चान्त्यपि पयोमुचः।
न तु सौदामनी तेषामभिष्वगं विमुञ्चति ॥

इत्यास्ते कोऽपि महिमा महिलाचरितस्य चित्रीकृतः। रामचन्द्रो रसवद्वचोऽभिमानं वहति—

कविः काव्ये रामः सरसवचसांमेकवसतिः।१.२।

## सत्यहरिश्चन्द्रम्

षडङ्कं नाटकं सत्यहरिश्चन्द्रं लोकचरितस्यौदात्त्यमादर्शयता विरचितं रामचन्द्रेण। कथानिबन्धनदृष्ट्यापीदं नव्यताया भव्यतायाश्च मुकुटमेव। रसानां पौनःपुन्येन दीपनं कवेः स्वभावदोष एवेति विसृज्य नाटकमिदं हरति चेतांसि। पुराण-प्रसिद्धस्य लोकविख्यातस्य प्रतिग्रामं प्रतिवृद्धमनुगृहीतस्य सत्यवादिनो हरिश्चन्द्रस्येह नवावतार इव प्रतिभाति—

अहो दानमहो धैर्यमहो वीर्यमखण्डितम्।
उदार-धोर-वीराणां हरिश्चन्द्रो निदर्शनम् ॥ ६.११

कुलपतिः सुधर्मायां सभायामिन्द्रमुखाद् हरिश्चन्द्रस्य स्तुतिं न सेहे। नृपस्य सात्त्विकतामन्यथा भावयितुमसौ कूटविधानमङ्गीचकार। शुक्रावतार-परिसरे वनषण्डे मुनीनुपरुन्धानं वराहं मृगयमाणेन नृपेण मुक्तो बाणो वराहं भित्त्वा गर्भिणीमाश्रम-हरिणीमपि जघान। सा च हरिणी कुलपतेर्दुहितुर्वञ्चनायाः प्राणप्रिया सीत्। आश्रमं प्रविष्टोऽभिनन्दितोऽपि राजा कुलपतिना खेटको दण्डनीय इत्यादिष्ट आत्मानमेव दण्ड्यं घोषयामास। भ्रूणघाती सर्वस्वदानेनैव मुच्यत इति कृतवञ्चनो राजा ददामि स्वं सर्वमपीति कृतवचनो भ्रूणहत्यानिष्कृतिमैच्छत्। अथाङ्गारकेण तापसेन सद्वितीयः कुलपतिः राज्ञा सह स्वर्णमुद्रा प्राप्तुं गतः। राजकोशाद् वणिग्भ्यो वा नीतं धनं, राज्ञः स्वाभरणानि वा सर्वं ममैवेति कुलपतिर्न स्वीचकार। मन्त्री वसुभूतिः नायं कुलपतिर्मुनिरिति तस्य व्यवसितैर्ज्ञातवान्। राजपरिचारकं कुन्तलं मुनिः शशाप—श्मशान-जम्बुको भवेति। वसुन्धरां त्यक्तुं आमासपूर्तेः स्वर्णमुद्रालक्षं दातुं च राज्ञे क्रूरमादिदेश सः।

कपटमुनिना वहुविधाभि परीक्षाभि सन्तापितो नायक स्वर्ण भास्वरता लभतेऽस्मिन्नाटके।

बहुश पिष्टपेषण, पौन पुन्येन पुरातन घटना-सघटनमतिरञ्जना-परतां च विहाय समीक्ष्यते चेत् तर्हि रामचन्द्रस्येयं कृति श्लाघ्यतामर्हति।
स्वस्य कृति स्तुवन् रामचन्द्र सीमानमतिक्रामत्ति—

व्युत्पत्तिमुखमेव नाटकगुणन्यासे तु किं वर्ण्यते
सौरभ्य प्रसवा भवा भणितिरप्यस्त्येव काचित् क्वचित्।
य प्राणान् दशरूपकस्य सकरोत्सेप समाचक्षते
साहित्योपनिषद्विद स तु रसो रामस्य वाचा परम्॥ १ ३

नैष कवेर्गर्वोक्ति सर्वथा साधु तथा हि—

गाहन्ता सरयूतटानि तुरगा स्वैरं गज सादिना
त न्नालुर्बहुलाध्यमक्षितिरुहच्छायासु विश्राम्यतु।
कुञ्जेषु स्यवधारितेषु दधतामाधोरणा कुञ्जरान्
बीक्षन्ता च मृगयु वारवनिता शक्रावतारश्रियम्॥ १ ३१

इत्यत्र 'गाहन्ता महिषा निपानसलिलम्' इत्यादिकस्य कालिदासस्य पद्यस्यच्छायैव गृहीता।

## रघुविलासम्

अष्टाङ्के रघुविलासे नाटके कथासूत्राणि स्वयमेव रामचन्द्र कविर्ददौ। यथा—

सीता काननतो जहार विहितव्याज पुरा रावण-
स्त व्यापाद्य रणेन ता पुनरयो राम समानीतवान्।
एतस्मै कविसूचित-मौक्तिक-मणि-स्वात्यम्भसे भूर्भुव -
स्वर्व्यामोहन-कार्मणाय सुकृयारत्नाय नित्य नम॥

पितुराज्ञया वनाय प्रवसता रामेण सह गच्छन्ती सीता छद्मपथेन गच्छन् रावणो विलोक्य कामवशगो विराधरूपेणावतीर्ण। परतो रक्षमा कोलाहलं श्रुत्वा शमयितु गते लक्ष्मणे विलम्बमाने रामोऽपि सीतामेकाकिनी विहाय गत। विमानेन सीता हरता रावणेन कृतयुद्धो जटायुर्हत। सुग्रीव-

प्रेपिताद् विद्याधराद् रामः 'कूटसुग्रीववपुर्धरः कोऽपि विद्याधरः परमार्थ-सुग्रीवस्य भार्यां भुञ्जानो विद्यते' इति श्रुत्वा मायासुग्रीवस्य वधं प्रतिज्ञातवान्। लङ्कायां रावणो मायाभिः सीतावशीकरणे विफलो बभूव। युद्धे रावण-बाणाहतो लक्ष्मणो भरतस्य मातुलेय्याः स्नानजलेनाभ्युक्षितः पुनरुज्जीवितः। युद्धे-रावणो हतः।

कविदृशा रामचरितं वैराग्यफलकं विस्मयफलकं च वर्तते—

मध्येऽम्भोधि बभूव विंशतिभुजं रक्षो दशास्यं पुनः-<br>
स्तत् पाताल-मही-त्रिविष्टप-मटांश्चक्राम दोर्विक्रमैः।<br>
मर्त्यस्तस्य पुनर्मृणालतूलया चिच्छेद कण्ठाटवीं<br>
वैराग्यस्य च विस्मयस्य च पदं रामायणं वर्तते॥

कवित्वं चापि क्वचित् क्वचिदेव मनो हरति। यथा शृङ्गार-रसाभास-प्रसङ्गे विक्षिप्तावस्थस्य रावणस्य प्रलापः—

वक्त्राणि हे हसत गायत तार-तारं<br>
नेत्राणि चुम्बत विहस्य च कर्णपालीः।<br>
दोर्वल्लयः कुरुत ताण्डवडम्बरं च<br>
श्रीरावणं ननु विदेहसुता रिरंसुः॥ ४.५५

## राघवाभ्युदयम्

रामचन्द्रस्य कृती राघवाभ्युदयं नाम दशाङ्कं महानाटकं नाद्यत्वे प्राप्यते। अस्य कथानकं आ सीतास्वयंवराद् गृहीतम्। रघुविलासस्य प्रस्ताव-नायामिदं रामचन्द्रः स्वरचनापंचके श्रेष्ठमुद्घोषयति। कविनैव कृते नाट्य-दर्पणेऽस्योद्धृता अंशा एवेदानीमस्माकं विभवः। सन्ति केचनात्रोदाहार्याः। यथा—

कलत्रमपि रक्षितुं निजमशक्तमात्मान्वय-<br>
प्रसूतमभिवीक्ष्य मामहह जात-लज्जा-ज्वरः।<br>
प्रकाशयितुमक्षमः क्षणमपि स्वमास्यं जने<br>
प्रयाति चरमोदधौ पतितुमेष देवो रविः॥

यस्य वंश्यः कलत्ररक्षणं न क्षमते, तस्य निमज्जनमेव श्रेय इति लोक-मतिमनुसन्दधान एवात्र रामचन्द्रः कवयति स्म। लक्ष्मणस्य ईषदुद्धतमुत्साह-मालिखन् कविः सुतरां नावीन्यं भजति—

सीताया वदन विकासमयता, रामस्य शोकानल
शान्ति यातु, सगीतयश्चलभुजैर्नृत्यन्तु शाखामृगा ।
सन्धानाय विभीषण प्रयतता लङ्काधिपत्यश्रिय
सौमित्रिर्दशकण्ठ कण्ठ विपिन काल क्रियाच्छिन्दत ॥

इत्यस्ति कश्चिद् वाग्विशेषो रमणीयार्थाभिनिवेशीति दिक् ।

## यादवाभ्युदयम्

यादवाभ्युदयमपि रघुविलासप्रस्तावनाया श्रेष्ठस्वरचनापञ्चकेऽन्यतम-मुदघोषयद् रामचन्द्र । तस्यैव नाट्यदर्पणे उदाहरणाष्टकमात्रमुपलब्ध परिचाययति तत्कृतिसौष्ठवम् । जैनपरम्परामनुसन्धान एव कवि कृष्णं नवमं वासुदेव कलयामास । तस्य राज्याभिषेक फलक हि नाटकम् । अस्य बीजारोपो यथा—

उदयाभिमुखमभाजा सम्पदयं विपत्तय पुंसाम् ।
ज्वलितानले प्रपात कनकस्य हि तेजसो वृद्ध्यै ॥

युधिष्ठिरमुखाद् भरतवाक्ये कविरात्मानमुल्लिखति—

कल्याण प्रभुव इव प्रसरतु, विपद प्रक्षय यान्तु सर्वा
सन्त श्लाघा समग्तामपचयमयता दुर्मतिर्दुर्जनानाम् ।
धर्म पुष्णातु वृद्धि सकल-मनुमन कैरवारामचन्द्र
प्राप्य स्थात नय लक्ष्मीं मुदमथ वहता शारदीं यादवेन्द्र ॥

## निर्भयभीमव्यायोग

रामचन्द्रस्य निर्भयभीमाख्यो व्यायोगो पाण्डवाना वन-प्रवास कथा-माश्रयति । उद्धतो भीमोऽस्य नायको द्रौपदी वनश्रिय दर्शयन् प्रविशति—

एते निर्झर झात्कृतैस्तु मिलित प्रस्योदरा क्ष्माभृत
कि चेत फल पुष्प-पल्लव भरैर्ध्यंस्तातपा पादपा ।
चक्रोऽप्येष वधूमुखार्धदलितैर्वृत्ति विधत्ते बिसै
कान्ता मन्द्ररुतस्तथैव परित पारापतो नृत्यति ॥

अहो निसर्ग-सौभाग्य-स्वभावोक्ति । अत्रान्तरे प्रविश्य पुरुष प्रतिदिन पर्यायेण प्रेषित जन्तुमेकमश्नन्त बक नामासुर सूचयति । तस्मिन्नहनि कस्य-चिद्विप्रस्य वारो बभूव । पुत्रेण स्नुषया च सह वृद्धा मातरं विलपन्ती भीमो

द्रौपदी च पश्यताम्। युवा शिलायामुपाविशत्। स मातरं प्रोक्तवान्—मातः, मरणकालो मे समायातः न मे रक्षकः कोऽपि' इति। तदाकर्ण्य भीम उवाच द्रौपदीम्—

त्रस्तांस्त्रातुं सुदति न सहो यद्यहं गाढबन्ध-
स्कन्ध-स्थाम-ग्रहिल-ललितौ धिक् तदेतौ भुजौ मे।
रक्षोवक्षः सपदि गदया चेन्न संचूर्णयामि
व्यक्तं विश्ववितयविजयी नास्मि भीमस्तदानीम्॥

आगच्छति बकागमनवेलेति युवा वधूं कष्टं-कष्टं विसर्जितवान्। स भीममायातं राक्षसमेव मत्वा मूर्च्छितः। द्रौपदी तमाश्वस्तं चकार। द्रौपदी भीमेन मुहुर्विसृज्यमानापि नातिदूरे वृक्षतलस्था बभूव। बकेन सार्धमायातौ राक्षसौ तां खादितुकामौ भीमस्य विषयेऽपृच्छताम्—किमयं गोपाल इति। युवयोरयं काल इति द्रौपदी सूचितवती। बकासुरः कठोरकलेवरं भीमं दशनदीर्णं कर्तुमशक्त उत्पाट्य गिरिशिखरमारुरोह। भीमस्तु बकासुरं हत्वा तत्रागतानां पाण्डवानामपि सभाजनतां गतः।

महाभारतीयेयं कथा नवीनतां भजन्ती व्यायोगेऽस्मिन् भीममादर्शपुरुषं प्रतिष्ठापयन्ती पुरुषकाराय प्रेरयति।

## रोहिणीमृगाङ्कम्

रामचन्द्रस्य नाट्यदर्पणे एव तस्य रोहिणीमृगाङ्क-प्रकरणस्य कतिपयांशा लभ्यन्ते। अत्र मृगाङ्कस्य नायकस्य रोहिणीं प्रति प्रेमा नाट्यायितः। स्त्रीकृतं प्रेम विशिष्यत इति द्रष्टा रामचन्द्र उत्कर्षं धत्ते खलु—

उन्मत्त-प्रेम-संरम्भादारभन्ते यदङ्गनाः।
तत्र प्रत्यूहमाधातुं ब्रह्मापि खलु कातरः॥

मृगाङ्केण कृता सौन्दर्यवर्णनाप्यभिनवामेवाभिख्यां दधाति—

सा स्वर्गलोकललना-जनवर्णिका वा
दिव्या पयोधिदुहितुः प्रतियातना वा।
शिल्पाश्रियामय विधेः पदमन्तिमं वा
विश्वत्रयी-नयन-संघटना-फलं वा॥

## कौमुदीमित्रानन्दम्

कौमुदीमित्रानन्दं नाम दशाङ्कं प्रकरणं नाम्नैव कौमुद्याः (कुलपति-

दुहितु ) मित्रानन्दस्य प्रणयकथा सूचयति। वरुणद्वीप निकषा पोते भग्ने मैत्रेयेण (विदूषकमित्रेण) सह मित्रानन्दो दोलारूढा कौमुदी दृष्ट्वा हृत । प्रार्थित कुलपतिस्तेन सुताया पाणिग्रहणमकारयत्।

तेन कूटकुलपतिना कौमुद्या सह शयानो पुरुषो गर्ते निपात्य मार्यत इति ज्ञात्वा तस्या एव निर्देशेन जागुलीदेव्या हालाहलहरी विद्यामधिगत्य सदयित पलाय्य मित्रानन्द सिंहलद्वीप गत। तत्र चौर इति दण्डित। पश्चाद् राजा तस्य सर्वं वृत्तं श्रुत्वा त मुञ्चति स्म, किन्तु मन्त्री कामरति कौमुदीकामो बभूव। अत्रान्तरे सर्पदष्टं राजकुमार शशाङ्क, जागुलीदत्तया विद्यया निर्विष विधाय मित्रानन्दो राजमान प्राप्य मन्त्रिणो गृहे सकौमुदीकोऽवसत्।

बहुविधानि नायकसकटानि अत्र वर्णितानि। न किञ्चिन्नव्यत्व भजत इद प्रकरणम्। यत्र कुत्रापि उपदेशा योजिता। यथा—

> अपयशोवितस्यार्थे प्राणानपि जहाति या।
> त्यजति तामपि क्रूरा मातरं दारहेतवे ॥ ७ ७ ॥

## मल्लिकामकरन्दम्

रामचन्द्रस्य पडङ्क प्रकरण मल्लिकामकरन्द नाम भवभूतेर्मालती-माधवमनुहरति।[1] मल्लिका चित्रलेखा - वैनतेययोर्विद्याधरयोर्दुहिता केनापि पालिता षोडशे वर्षे पितृभ्या ग्रहणीयासीत्। ता च निशीथच्छन्ने काममन्दिरे स्वघातायोद्यता मकरन्दोऽरक्षत्। ततो मकरन्दो द्यूकरैर्गृहीतो मल्लिकाया पालकेन मोचित। इत्य नायकयोर्बहुविधानि सकटानि प्रकरणेऽस्मिन् वर्णितानि। पद्यमस्य सोत्कर्पमास्वादनीयम्—

> आस्य हास्यकर शशाङ्कयशसा, बिम्बाधर सोदर
> पीयूषस्य वचासि मन्मथमहाराजस्य तेजासि च।
> दृष्टिर्विष्टपचन्द्रिका स्तनतटी सद्मो भटी-नाट्ययम्-
> रौचित्याचरण विलासकरण तस्या प्रशस्यावधे ॥

## वनमाला

वनमाला नाम नाटिका नाद्य यावत् प्राप्यते। नाट्यदर्पणमनुसृत्य नाटिकासु चत्वारोऽङ्का, युवतिर्नायिका, स्त्रीपात्रबहुल्व च सन्ति। राजा

१ प्रकाशितमिद नाटक सम्बोधि पत्रिकायाम १९७८-७९ वर्षे

कपाल ते द्विधा करिष्यतीति। अयमत्र पौरस्त्यो वृत्तान्त—गृहे तौ दम्पती मियो दन्तादन्ति, नखानखि, पादापादि, हस्ताहस्ति कलहायमानावास्ताम्। अन्ते च, उल्मुके पीठके भाण्डादिभिश्च प्रयुक्तैर्युद्धतृप्तमानसं पतिं विधाय कलहप्रिया व्यसर्जयत्। तस्या वार्धक्यकदर्थितकलेवरत्व सभासलि शल्यमिव व्यथयति स्म। अत एवासौ मदनमञ्जर्या मञ्जर्यामिव महकारस्यालि पतित। तत्रोपस्थाय दन्तुरा श्वदष्टा दृष्ट्वा जन्तुकेतु भिषज तदुपचाराया-कारयामास। विशेषज्ञोऽसौ स्वं प्राशसत्—

> व्याधयो मदुपचार लालिता
> मत्प्रयुक्तममृत विष भवेत्।
> किं यमेन सरुजा किमौषधं—
> जीवहर्तरि पुर स्थिते मयि। १.२२

अजा-पालन-परस्य दिगम्बरस्य जटासुरस्यान्यतमामजा कदाचिद ज्ञानराशिर्वल्मतरी-भ्रमेण भक्षणार्थं निहतवान्। भ्रमेण मारितवानजपराद्ध एवाज्ञानराशिरिति निर्णयो मदनमञ्जर्या सभाया सभासलिना दत्त। अथ मिथ्याराशेर्जाया सुषुवे। अत्रान्तरे मदनमञ्जर्या प्रीतये स्वर्णमयीमार्हती मूर्ति दातुकाममागत जटासुर मललिप्त दृष्ट्वा दन्तुरा तत्क्षण द्वारादेव प्रताड्य अपसारयितुमादिदेश।

द्वितीयेऽङ्के वेश्या-प्रणय समर्पितप्राणा सङ्ग्रामविसर झकटकसार—मिथ्याशुक्ल-फुड्कटमिश्रप्रमृतयो मदनमञ्जरी स्तुवन्ति। यथा मिथ्याशुक्ल परमार्थसुन्दरी ता प्रशसति—

> किं नेत्रयोरमृतवर्तिरिय विधातु—
> राद्या त्विमद्भुत शरीर-विधान-लेखा।
> ससार-सारमहह त्रिजगत्यविश्रम्—
> तद् रत्नमेतदुपसर्पति पङ्कजाक्षी। २ १८

यथा वा फुड्कटमिश्रस्य सौन्दय दर्शनप्रतिभास्फुरति—

> लावण्यामृत—सरसी
> ललितगतिर्विकच कमलदल-नयना।
> कस्य न मदन शरासन—
> विष र-मनस्तापमनुहरति। २ २०

मिथ्या शुक्ल कलहायित्वा फुड्कटफूत्कृत्य शण्ड इव कृशवृप पलायन-शरणं चकार।

स्थूलां रजकीमुपभोगेन सम्भावयन्तं व्यसनाकरं कलहप्रियो दिगम्बरो जटासुरः कलिं कृत्वा दवयांबभूव। जटासुरो दन्तुरयेव कामक्रीडा-परमातुरो बभूव। तयोः परिणयं कारयञ्जङ्गमश्चतुर्वेदी मन्त्रमपठत्—

जातस्य हि ध्रुवो मत्युर्ध्रुवं जन्म मृतस्य च।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि। २.३४

इति स हरीतकद्वयं दक्षिणां दीयमानां दृष्ट्वा जटासुरेण कलहं-चकार।

असौ कविर्निसर्ग-पर्यवेक्षण-कौशलमपि व्यनक्ति

मुखकमलं परिचुम्बन्नलि-भर-दर-दलितपद्मिनी निवहः।

वयमुपसर्पति मन्दश्चन्दनवनपावनः पवनः। १.१०

भरत वाक्येनास्य सदिच्छापि व्यज्यते—

आस्तां विद्वत्प्रकाण्ट-श्रवणपुट-चमत्कारिकाव्यं कवीना—
मस्तुव्यामोहशान्तिः सृजतु हृदि मुदं निश्चलां चन्द्रचूडः॥

## हरकेलिनाटकम्

महाराजो विग्रहराजदेवः सोमदेवकृतस्य ललितविग्रहराजस्य नायको हरकेलिनाटकं ११५० ख्रीष्टाब्दमभितोः विरचितवान्, पञ्चमाङ्कस्य तस्य हरगौरीसंवादांश एवावशिष्टोऽधुना लभ्यते। शिवाभ्यां सह विदूषकप्रतिहारयो-रुपस्थितिः शिवार्चा च रावणकृतात्र सूच्येते। शिवस्तत्सेवकश्च किरातौभवतः। कुतोऽपि प्रसरन्तं सुगन्धं ज्ञातुं शिवो मूकमादिशत्। मूकोऽर्जुनेन क्रियमाणं यज्ञं शिवाय न्यवेदयत्। पुनश्च समादिष्टो मूकः किरातरूपेण गतोऽर्जुनेना-युध्यत। हरकिरातोऽपि तत्र गत्वायुध्यत। अन्ततः शिवोऽर्जुनस्य पराक्रमं बहु मानयामास।

किरातार्जुनीयमपेक्ष्य हरकेलिनाटकस्य कथावस्तुनि नव्यता दर्शनीया। शिवादयोऽत्र कूटपात्रतां भजन्ति। एतादृशानि नाटकानि परस्तात् छाया-रूपकाणि प्रख्यातानि।

## चन्द्रलेखाविजय-प्रकरणम्

चन्द्रलेखाविजयस्य प्रणेता देवचन्द्रो विख्यातस्य जैनविदुषो हेमचन्द्रस्य शिष्यो बभूव। अष्टाङ्कमिदं प्रकरणमजितनाथस्य वसन्तोत्सवे प्रथमं प्रयो-

जितम् । अस्यान्ते कुमारपालेना र्णोराजस्य विजयो वर्णित । अस्य रचना ११५० ख्रीष्टाब्दमभिन प्रतिभासते ।

देवराजेन मानमुद्राभञ्जनमित्यपर नाटकं विरचितम् । न तदद्यावधि लब्धम् ।

## ललितविग्रहराजम्

महाकवि सोमदेवो शाकम्भरी-नृपस्य चतुर्थस्य विग्रहराजदेवस्य सभाजनार्थामिदनाटक ललितविग्रहराज विरचितवान् । ११५३ ई० वर्षे नाटकमिद देवालयभित्तौ शिलापट्टेपूत्कीर्य निवेशितम् । देवालय भङ्क्त्वा मसजिद भित्तौ ता शिला जटिता अद्यापि तात्कालिक गौरव गायन्ति । चरितनायको विग्रहराजश्चाहमानवश्याना सम्राजामन्यतमस्तोमरान् दिल्ली विजित्य यवनानपि भूरिशो युद्धेषु पराजयति स्म । अयञ्च ११५३ त ११६३ ई० पर्यन्त राज्यपरिपालयति स्म । अस्य कृतिर्हर्केलिनाटकं मन्दिरभित्तिपूत्कीर्णमद्यापि "ढाई दिन का झोपडा" नाम्नि मसजिदभित्तौ स्वदुर्दशा व्यञ्जयति ।

नाटकीयकथानुसारेणेन्द्रपुरराजस्य वसन्तपालस्य कन्या देसलदेवी प्रति स्वप्नदर्शन-जन्मा प्रणयो विग्रहराजस्य मानस उदित । तमागता तस्या सखी शशिप्रभा सुतरा समुत्सुकमदर्शत् । सोऽपि कल्याणवत्या देसलदेवी सदिशति स्म तुरुष्कान् विजित्य त्वा मिलामीति । इत पर प्रणयव्यापार खण्डित एव ।

विग्रहराजस्य स्कन्धावारे बन्दिनौ तुरुष्कौ प्रति म्लेच्छ-राजस्य चारो निगूढ सैन्यविवरण ददौ । बन्दिनौ च राजान प्रशस्य पुरस्कारान् प्रापतु । बलवत्तरेण हम्मीरदेवेन योद्धुमना विग्रहराजो मातुलेन सिंहबलेन मन्त्रिणा श्रीधरेण च विमर्शयामास । अत्रान्तरे हम्मीरस्य दूतस्तत्रागन । अत परमुत्कीर्णो लेखो नाद्यावधि लब्ध । नाटकमिद सम्पूर्ण नोपलभ्यमिदानीम् ।

## पार्थपराक्रमव्यायोग.

महाभारतीया पार्थकथामनुरुध्य प्रह्लादनदेवेन कृत पार्थपराक्रमव्यायोगा द्वादशया ख्रीष्टशताब्द्या निर्धायते । अर्बुदप्रशस्तौ सोमेश्वरो महाकविरमु स्तौति स्म स्वस्य कीर्तिकौमुद्या चापि । यथा कीर्तिकौमुद्याम्

श्री प्रह्लादनदेवोऽभूदद्वितयेन प्रसिद्धिमान् ।<br>
पुत्रत्वेन सरस्वत्या पतित्वेन जयश्रिय ॥

श्रीभोज-मुञ्ज-दुःखार्ता रम्यां वर्तयता कथाम्
प्रह्लादनेन साह्लादा पुनश्चक्रे सरस्वती ॥

सोमेश्वर एव सुरथोत्सवे एनं लोकोपकारपरायणं श्लाघते—
"श्री प्रह्लादनमन्तरेण विरतं विश्वोपकारव्रतम्"

"देवी सरोजासन-संभवा किं कामप्रदः किं सुरसौरभेयी ।
प्रह्लादनाकारधरा धरायामायातवत्येष न निश्चयो मे ॥

कोटीश्वरप्रशस्तौ चायं षड्दर्शनावलम्वः सकलकलाकोविदश्च-प्रशंसितः । सूक्तिमुक्तावल्यामस्य काव्यानि संगृहीतानि जल्हणेन । मारवाटे चन्द्रावतीराज्यस्य तदानीं गुर्जराधीनस्य राजकुमारः परमारः प्रह्लादनः पालनपुरं प्रतिष्ठापयामास । तस्य भ्राता धारावर्षो महाधनुर्धर आसीत् ।

पार्थपराक्रमकथानुसारेण दुर्योधनेन हृता विराटस्य गावः । गोपाध्यक्षेण सूचितः कुमार उत्तरः सज्जितो युद्धाय । वृहन्नलारूपधरोऽर्जुन उत्तरस्य कातर्यं जानाति स्म । स उत्तरस्य रथे सारथिरभूत् । मध्येभागं शत्रुसेनां वीर प्रवर-वृतां दृष्ट्वा पलायितुमिच्छन् कुमारोऽर्जुनेन धिक्कृतः । पश्चात् तं सारथिं कृत्वा स्वयं देवदत्तं नाम शङ्खं धमति स्म ।

ध्वजस्थं हनुमन्तं देवदत्तध्वनिं च परिज्ञाय भीष्मद्रोणादयस्तमर्जुनं निर्णीतवन्तौ । भीष्मद्रोणयोः प्रणामार्थं तच्चरणयोर्वाणद्वये प्रहितेऽर्जुनेन, अश्वत्थाम-कर्णादिषु च पराजितेषु एकल एव दुर्योधनो रणभुवि स्थितोऽपश्यत्—

धृतराष्ट्रसुतैर्दृष्टः किरीटी विश्वतो मुखः ।
एकोऽप्यनेकधा वल्गन्नात्मा नैयायिकैरिव ॥

अथ क्षतकाये विराटराजे रणमुखान्निरसितेऽर्जुनः सुयोधनं रथस्थं शरैर्जर्जरविग्रहं निश्चेष्टं कृत्वा तत्स्यन्दनमारुह्य, भीमेनायं वध्य इति विचार्य तन्मुकुटमेव गृहीत्वा तत्पताकायां वाणेन लेखमेवं कृतवान् —

छलद्यूते जेतुर्जतुमयमगारं रचयितु—
र्गरं दातुः कान्ता-कच-निचय-हर्तुश्च सदसि ।
स्वयं गन्धर्वेन्द्रादधिगमितजीवस्य भवतः
शिरःस्थाने मानिन् मुकुटमय निन्ये विजयिना ॥

तुरुष्कमृदिते देशे गोप्रतीकमुपादाय प्रह्लादनदेव एनं व्यायोगमरचयत् ।

पार्थमुदाहर्तुं कामो विजिगीषापरता च राजन्यानां दीपयितुमना लक्ष्यते लेखकः। यथा पार्थमुखेनैव कविः सन्दिशति —

> द्वारं विमुक्ते प्रतिबध्नमुक्त कौर्यङ्गना-नर्तन-रङ्गभूमिम्।
> फल पिपासोरिह जीवितस्य कः सगर प्राप्य पराङ्मुखः स्यात्॥

प्रह्लादनदेवः समाधि समता-प्रसादगुणप्रियोऽद्भुतरसनिर्भरश्चाव-लोकयतेऽमुष्मिमन् वीररसप्रधाने व्यायोगे—

> यत्र खलु निकार-कारण-रण प्रेमा कुमारः प्रभुः
> स दर्पः सुकवे समाधि-समता गर्भः कुमारस्य च।
> तत्रास्मात्सकुण्ठिताद्भुतरस स्रोत स्तुते रूपके
> चेतः कौतुकलोलुप सपदि तत् सम्पाद्यतामुद्यम॥

इति प्रस्तावनायामुक्तम्। राजन्यानां कृते उपदेशवचनमेवात्र भरत-वाक्यत्वेनोपनिबद्धम्—

> तद्दक्षाः विचक्षणा क्षितिभुजो राज्यं भजन्तु स्थिरम्॥

## धनञ्जयविजयव्यायोग

धनंजयविजयस्य रचयिता काञ्चनाचार्यो द्वादश्यां शताब्द्यां महाविदुषो नारायणोपाध्यायस्य पुत्र आसीत्।

अस्याभिनयः शारदोत्सवे जयदेवो राजा प्रायोजयत। स कान्यकुब्जानां नरेशो भवेत्।

महाभारतीयैव कथात्रोपनिबद्धा। कौरवसेना दुर्योधनस्य सैनापत्ये विराटस्य गाः पाहरत्। पौराणिकी कथा किंचिदिव परिवर्त्यात्र नाट्यायिता। राजकुले नियुक्तोऽर्जुनो तत्रत्यराजकुमारं सारथ्ये निवेश्य कौरवान् विजितवान्। वीररसभावकाः संवादा अत्र मनो हरन्ति। यथा दुर्योधनः पार्थं प्रति कथयति—

> वनवास परिक्लेशात् किं निर्विण्णोऽसि जीवने।
> यदस्मोहरेवं एव स्वमनेकैर्योद्धु मुद्यत॥ ४५

तं प्रत्युवाच कौन्तेयः —

> एको निवात कवचान् सह कालकेयैर्मस्मीचकार भगिनीमहरच्च शौरे।
> एकेन खाण्डववनं जुहुवेऽनले च पार्थस्य नाभिनव एष रणेषु पन्था॥ ४६

अत्र नेपथ्यस्थितैः पात्राणां रंगस्थितपात्रैः संवादः प्रवर्तते। नेपथ्यात् सन्देशाः श्राव्यन्ते। नेपथ्यस्य भागद्वयं प्रकल्पितम्। युद्धं रंगे न भवति।

## मोहराजपराजयम्

पञ्चाङ्कं मोहराजपराजयं नाम प्रतीकनाटकं यशःपालेन गुर्जरदेशे महाराजस्याजयदेवस्य शासनकाले ११७४-११७७ ख्रीष्टाब्देषु विरचितम्। महावीरयात्रोत्सवे कुमारविहारेऽस्य प्रथमाभिनयो बभूव। यशःपालस्य पिता राजमन्त्री आसीत्। यशःपाल आत्मानमजयदेवस्य चरणकमलराजहंस इति वर्णयति। नाटकस्य कथासारः पद्येनैकेनागीयत—

पश्चात्स कुमारपालनृपतिर्जज्ञे स चन्द्रान्वयी
जैनं धर्ममवाप्य पापशमनं श्रीहेमचन्द्राद् गुरोः।
निर्वीराधनमुज्झता विदधता द्यूतादि-निर्वासनं
येनैकेन भटेन मोहनृपतिर्जिग्ये जगत्कण्टकः॥ १४

मोहराजपराजयानुसारेण विवेकचन्द्रो राजा जनमनोवृत्तौ राजधान्यां सदाचारदुर्गे वसन् मोहराजेनाक्रम्य दुर्गाविरुद्धसंचारः कृतः। दुर्गाय पानीयं नयन्तीं धर्मचिन्तां नदीं बन्धेन निरुध्य दुर्गवासिनः पिपासाकुलीकृता मोहराजेन। विवेकसैन्येन निर्मितः सदागमकूपोऽपि दुर्गस्थैर्विपक्षिभी रजोनिवहैः पूरित इति दुर्गवासिना कामनाम्ना चरेण मोहो विज्ञापितः। कथंकथमपि प्रार्थ्य विवेकचन्द्रो धर्मद्वारेण बहिर्गमनं प्रति मोहेनानुमतः शान्त्या भार्यया कृपासुन्दर्या च दुहित्रा दुर्गं जहाति स्म।

अथ कुमारपालो जैनमुनिप्रभावाद् भार्यां नीतिं, दुहितरं कीर्तिमञ्जरीं पुत्रं च प्रतापमत्यजत्। कीर्तिमञ्जरी च मोहं संमिलति स्म। मोहः कुमारपालपक्षमुपजापयन् प्रत्यजानात् कुमारपालो वा भवेदहं वा तिष्ठेयं नोभय इति। विवेकस्य दुहितरं भार्यीकृतया भवान् मोहं जयेदिति गुरुणोपदिष्टः कुमारपालो हेमचन्द्रस्य तपोवने तां कृपासुन्दरीं ददर्श। तयात्मानं विनोदयन्तं राजानं दृष्ट्वा महिषी राज्यश्रीर्मानं कृतवती। सा कृपासुन्दर्याः सौन्दर्यक्षयं देवीं जगदम्बां प्रार्थयामास। देवीप्रतिमायाः पराक् स्थितेनानुचरणेन कृपासुन्दर्या विवाहेनैव राज्ञोऽभ्युदयो विजयश्च संभाविनाविति सन्देशं श्रुत्वा देवीवचनं च मत्वा राज्यश्रीः स्वयमेव विवेकं दुहितुर्हस्तं कुमारपालाय याचितुं गता। विवेको दुहितुर्विवाहाय समयं पुरश्चकार—निःसन्तानेभ्यो धनादानं पापसप्तकप्रचारं च त्यक्त्वा कुमारपालः कृपासुन्दर्याः पात्रतामर्हतीति राज्ञा स्वीकृते ऽनुबन्धे नगरात् पशुहिंसा-द्यूत-मद्यपानादिकं विलुप्तमेव।

मोहस्य सैनिका रागो द्वेषोऽनङ्ग क्रोधो गर्वो, दम्भ पापण्ड कलिर्मिथ्यात्वराशि पञ्च विपया प्रमाद पापनेतु शोक श्रृंगार, इत्येते चान्ये च वहव आसन्। कीर्तिमञ्जरी प्रतापश्च तेन सगतौ आस्तामेव। ससहायो मोहराज कुमारपालमाचक्राम। कुमारपालो योगकवच-सन्नद्ध-कलेवर पुण्यकेतु विवेकचन्द्रं ज्ञानदपण च सहायोज्य महायुद्धे मोह पराजय-तेति विवेकचन्द्रो जनमनोवृत्ति स्वा राजधानी पुन प्रपन्न।

मोहराजपराजय नाटक प्रतीकपात्रबहुलमपि नैव सर्वथा प्रतीक-नाटकम्। कुमारपालो विदूषको व्यापारी कुबेर तत्सहायाश्च सर्वे नरा एवेति मिश्रकोटिकमेवेद रूपकम्। चारित्रनिर्माणमेवेदृशा रूपकाणा लक्ष्य भवति। अत्र च यश पाल साफल्यमलभत। काव्यस्य प्रभविष्णुतापि कवि यशस्विन शासति। यथा—

उद्यान कलसग्रहेण लवणेनाम्र वपुर्जीविते –
नास्य नालिकेयेन्दुना वियदलकारेण काव्य पुन।
राष्ट्र भूपतिना सर कमलिनीपण्डेन हीन यथा
शोच्यामेति दशा हहा गृहमपि त्यक्त तथा स्वामिना॥

विण्टरनित्समहोदयानुसारेणनेद रूपक केवल काव्यत्वेन रोचतेऽपितु गुर्जराणा तात्कालिकीमैतिहासिकी समाजिकी चावस्था प्रकाशयतीति महत्व-पूर्णम्। धार्मिक, आग्रह प्रतिबन्धनात्येव काव्यचारुतामिति विपये नापवादो यश पाल।

## प्रबुद्धरौहिणेयम्

पडङ्कस्य प्रबुद्धरौहिणेयस्य प्रकरणस्य रचयिता रामचन्द्रो जैनमुनि-र्वादिदेवस्य जयप्रभसूरे शिष्यो द्वादश्या शताब्द्याश्चरमे भागे जन्मना भुवमलकुर्वाण स्वातन्त्र्यप्रेमस्येमान् स्तुवन् कालकूटचतुष्टयी परिभाषते स्म—

अयासक्ते जने स्नेह पारवश्यमयाचिता।
असत्सुश्च प्रियालाप कालकूटचतुष्टयी॥ ५ २

विण्टरनित्समहाभागोऽस्याविर्भावकाल ११८५ खीष्टाब्द निर्धारयति।

प्रकरणानुसारेण पाटच्चरो लोहखुरा मरणकाले स्वपुत्र रौहिणेयमुप-दिष्टवान् –महावीर-वाणी मा ते कर्णयो पतेदिति कुलव्रत त्वयानुसरणीयम्। तत पर स कुलाचारध्वसिनो जिनवाणी प्रति वद्धवैरो बभूव। रौहिणेय

पितरि मृते कदाचिद् वसन्तोत्सवदत्तोल्लासान् नागरान् स्व-स्वप्रेयसी-कण्ठ-निषक्त-बाहून् मकरन्दोद्याने सविलासानालोक्य भूयिष्ठां सुन्दरीं कामपि स्वार्थं हर्तुमचिन्तयत्—

वणिग् वेश्या कविर्भट्टस्तस्करः कितवो द्विज. ।
यत्रापूर्वोऽर्थलाभो न, मन्यन्ते तदहर्वृथा ॥ १.१३

अथासावात्मानमन्तर्धाय कस्यापि धनिकस्य सदने मदनवतीं नामाङ्गनां रम्यतमां पति-सौभाग्यफलया चारुतया बद्धासूयां निरवग्रह-सौभाग्यसमुन्नयन-परेणोपपतिना सहालपन्तीं कल्लोलिनीमिव सागरं विहाय नदेन संगम्यमाना-मपश्यत्। शीतले कदलीगृहे कामविलासं निर्वोढुकामौ तौ कृतनिश्चयक्रमे सस्पृहं वियुज्य पुष्पावचयाय मदनशयनप्रयोजनकाय पृथक्-पृथक् दिशौ गतौ। एकाकिनीं मदनवतीं मदनाभिष्वङ्गतरङ्गिताङ्गी पुष्पाण्यवचिन्वानां वर्णयति—

पुष्पार्थं प्रहिते भुजेऽनिलचलन्नीलाञ्चिकाविष्कृतः
सल्लावण्यलसत्प्रभापरिधिभिर्दोर्मूलकूलंकषः ।
ईषन्मेघ-विमुक्त-विस्फुरदुरु ज्योत्स्ना-भर-भ्राजित-
व्योमाभोग-मृगाङ्क-मण्डल-कलां रोहत्यमुष्याः स्तनः । १.२६

ततः कियद् दूरंगते भुजङ्गे रौहिणेयः सखायं शबरमादिष्टवान्—व्याजेनोपपतिमस्यास्तत्रैव विलम्बय, यावदहमेनां हरामीति ।

पश्चात्तां स्कन्धेनोद्वाह्य पलायते स्म ।

निवृत्य जारो भूयस्तामन्विष्यन्नलभमानः शबरेण प्रोक्तः—परिजन-परिवृतः क्रुद्धः कोऽपि निकट एव लतान्तरे मन्त्रयत इति। असौ मदनवत्या यदि पतिर्भवेत्तर्हि मारयेदेव मामिति सुतरां भीतो जारः पलायते स्म। मदन-वती रौहिणेयेन स्वीकृता ।

पुनः रमणीकामो रौहिणेयः शबरद्वितीयः श्रेष्ठिगृहस्य समीपे गत्वा नवदम्पती गृहप्रवेशमुहूर्तं प्रतिपालयन्तौ परिजनं च सोत्साहमुत्सवलग्नम-दर्शत्। प्राक् तावच्छबरो मध्ये परिजनमनृत्यत्। तावदेव रौहिणेय. कपटस्त्री-वेशः समागतः—

''कुसुम-मुकुटोपशोभिता पट्टांशुक-कृतनीरङ्गिकानना कुङ्कुम-स्तवकाञ्चित-ललाटा युवतिः । कक्षान्तरेऽलक्ष्यश्चौरिकासर्पश्च ।

श्वश्रूरूपधरो रौहिणेयो वरं स्कन्धमारोप्यानृत्यत्, काप्यनुचरी वधूं

स्कन्धे धृत्वानृत्यत्। नर्तकी वामनिका शबरस्य स्कन्धमारुरोह। रौहिणेयो गन्धर्वांश्चादिदेश—तारं वाद्यानि वादयतेति। एवभूते तुमुले मनोरमावेशो रौहिणेय स्वकक्षायाश्चौरिकासर्पमपातयत्। वास्तविकसर्पं मत्वा पलायमाने जने रौहिणेयो वरमपाहरत्। नातिदूर गत्वा पुरुषरूपेण दस्युदर्शनेन रुदन्त वर छुरिकया खण्डशस्त्वा छेत्स्यामीति भीषयित्वा गिरिगुहामनयत्। विलम्बन परीक्ष्य श्रेष्ठिना कृत्रिमसर्पं परिज्ञाय वरमपश्यन् नाचिरेणैव बोधितो यत् दस्युना केनापि स हृत इति।

राज्ञादिष्ट आरक्षको रौहिणेय निग्रहीतु मत्वरो बभूव।

रौहिणेयस्तावदुग्रदण्ड-चण्ड-प्रचण्ड राजान विदित्वापि तदागारादेव स्वर्णराशि चोरयितुमुपक्रमते स्म।

एकदा प्रदोषे भगवन्त महावीर परिषदि समागत दृष्ट्वासौ पितृ-वचनानुवर्ती पाणिभ्या पिहितकर्णो निवार्यमाणजिनवचनश्रुतिश्चलन् पादे कण्ट-केन विद्ध कर्णाभ्या हस्तौ विमोच्य कण्टकाकर्षणमतिर्भगवद्वचनमशृणोत्—

निःस्वेदाङ्गा अमविरहिता नीरुजोऽम्लानमाल्या
अस्पृष्टोर्वीवलयचलना निर्निमेषाक्षिरम्या।
शश्वद् भोगेऽप्यमलवसना विस्रगन्धप्रमुक्ता—
श्चिन्तामात्रोपजनितमनोवाञ्छितार्था सुरा स्यु॥

चौर्योपक्रमे स राजप्रासादस्य निकटे प्रहरीभिराहूत पलायमान चण्डिकायतन-प्राचीरमतिलङ्घयन् प्रसृतजाले पतितो गृहीत। राज्ञ समक्षमुपस्थापित उपस्थितेऽमात्येऽभयकुमारेऽसौ शूलारोपणं दण्डित।

तत्रोऽमात्योऽवदत्—नास्मात् किमपि चोरित वस्तु प्राप्तम्। अत एव नाय शूलामारोपणीय इति। पश्चात् पृष्ट आत्मान शालिग्रामवास्तव्यं कृषक दुर्गचण्डनामान कार्यतोऽत्रायात नगरे सम्बन्धिन कस्याप्यभावेन चण्डिकायतने सुप्तमारक्षकैर्धियमाण प्राकारलङ्घनकृत—विवशोऽहम निगृहीत विज्ञापितवान्। शालिग्रामे गतो दूतो ग्रामीणैर्दुर्गचण्ड इह वसत्यथ कार्येण कुत्रापि गत इति विज्ञापित। दूतमुखादेतच्छ्रुत्वा राजा तद्दिवसे न्यायाधिकरणकार्यं स्थगयामास।

स्वापराध कथचिद् रौहिणेय एव स्वीकुर्यादिति सकल्प्य राजामात्या नाट्याभिनयलीला कारयामास येन पीतप्रचुरतर मद्यो दस्युरात्मान स्वर्गलोक-गतमनुभवेत्। तत्र राजकीयो नाट्याचार्यो भरत इति वाराङ्गनाश्चाप्सरस इत्यासन्। मद्यविचेतनस्य रौहिणेयस्य दक्षिणेन चन्द्रलेखा-वसन्तलेखे वामेन च

ज्योतिष्प्रभा-विद्युत्प्रभे चोपाविशन्। शृङ्गारवत्यां नृत्यन्त्यां गन्धर्वेषु च सङ्गीतं प्रतिपन्नेषु पाटच्चरं लब्धसंज्ञमाकलय्य नटाः कलकलं चक्रुः—देवलोकोऽद्य धन्यो यत् स्वामिविहीनाननाथानस्मान् भवादृशः स्वामी प्रतिपन्नः।

"अस्मिन् महाविमाने त्वमुत्पन्नस्त्रिदशोऽधुना।
अस्माकं स्वामिभूतोऽसि त्वदीयाः किंकरा वयम्॥"

ततश्चन्द्रलेखोवाच—प्राणप्रियो मे त्वं जात इति। विद्युत्प्रभा कामातुरेव जगाद—

जाता ते दर्शनात् सुभग समधिकं काम-दुःस्थावस्थेति।

अत्रान्तरे प्रतीहारेण प्रविश्योवाच—स्वर्लोकाचारं विनैव युष्माभिः संगीतकमारब्धमिति। नवागन्तुको देवोऽत्र प्रथमं पुराकृतानि पुण्यानि पापानि च घोषयित्वैव स्वर्भोगाधिकारी भवतीति समुदाचारः। रौहिणेयमुपगम्य मुनीन्द्रप्रेषितमात्मानं विज्ञाप्य मानवजन्मार्जितानि शुभाशुभानि कर्माणि श्रावयितुमुत्साहयामास। अथ रौहिणेयो विष्वगवलोकमानः रहस्यमजानात् स्विन्नगात्रा इमे जना भुवं स्पृशन्ति, म्लान-माल्यावेष्टितकण्ठाः कथं देवा? इदं कपट-नाटकमेव मत्कृते रचितं स्यादिति प्रोक्तवान्।

दत्तं पात्रेषु दानं नय-निचित-धनैश्चक्रिरे शैलकल्पा—
न्युच्चैश्चैत्यानि चित्राः शिवसुखफलदाः कल्पितास्तीर्थयात्राः।
चक्रे सेवा गुरूणामनुपमविधिना ताः सपर्या जिनानां
बिम्बानि स्थापितानि प्रतिफलममलं ध्यातमर्हद्वचश्च॥६.१८

इमानि तावच्छुभानि कर्माणि, अशुभान्यपि वदतु। इति प्रतीहारेण प्रोक्तः स प्रत्युवाच—

दुश्चरित्रं मया क्वापि कदाचिदपि नो कृतम्।

इति श्रुत्वा प्रतीहारः पुनरपृच्छत्—परस्त्रीप्रसङ्ग-परधनादान-द्यूत प्रभृतीनामन्यतमं सर्वं वा स्वभावेन मानव आचरत्येव। तद् भवानपि ब्रवीतु कतमदेषां पातकं कृतमिति। रौहिणेयोऽवदत्—मम स्वर्गतिरेव प्रमाणयति नाहं दुष्प्रवृत्तिं कांचनाचरमिति। ततो राजानमनुगच्छन्नमात्य प्रविश्यावदत्—

प्रपञ्चचतुरोऽप्युच्चैरहमेतेन वञ्चितः।
वञ्च्यन्ते वञ्चनादक्षैर्दक्षा अपि कदाचन॥

इति प्रमाणाभावेनादण्ड्यममुं सत्यं पृष्ट्वा मुञ्चतु महाराज इति।

राजामात्याभ्या रहसि पृष्टो रौहिणेयो रहस्यमुदघाटयत्—

नि शेषमेतन्मुषित पत्तन भवतो मया ।
नान्वेषणीय कोऽप्यन्यस्तस्कर पृथिवीपते ॥

इत्यव यत् किमपि मया नटित निवेदितवान्—तत्र हेतुर्महावीरो जिन ।
पूर्ववृत्त स यथा पितुरुपदेशो यथा च कण्टकनि सारणाय हस्तौ कर्णाभ्या मया सारयता जिनवाक् श्रुता, यथा च देवाना नैसर्गिको व्यवहारो निर्निमेष-त्वादिर्ज्ञातोऽय च कूटदेवलोको विज्ञात इति । असौ मन्त्रिण गिरिगह्वरस्थानि स्तेयेन सचितानि धनानि प्रत्यर्पयितुमसूचयत्, स्वय च जिनस्य शरण प्रपन्न । अथ गह्वरादेव मदनवती-मनोरथकुमारो पुष्कलश्च स्वर्णराशि प्राप्ता । राजा चान्ते रौहिणेयमभ्यनन्दत् ।

त्व धन्य सुकृती त्वमद्भुतगुणस्त्व विश्वविश्वोत्तम—
स्त्व श्लाघ्योऽखिलकल्मष च भवता प्रक्षालित चौर्यजम् ।
पुण्यै सर्वजनोन्नता-परिगतो यो भूभुव स्वोर्जितो
यस्तौ वीरजिनेश्वरस्य चरणौलीन शरण्यौ भवान् ॥

नाट्यकथावस्तुनि जैनमतप्रतिष्ठापनाग्रहस्तावदन्त एव समापतति । सस्कृत नाट्य साहित्येऽस्य प्रकरणस्य कथानकगता प्रत्यग्रता, सङ्गीतस्य पुष्कलता, रौहिणेयस्य दस्योर्नायकता कूट-घटना वैचित्र्यं, न्यायालय-वसन्तोत्सव—समवसरणादीना दृश्यता सुतरा रञ्जकत्व भजन्ति सर्वथाभि नवशिल्पमघटना चोन्मीलयन्ति । सानुप्रासा मञ्जीनमयी प्रसन्न गतिका कविशैली नृत्यन्तीव मनसो मुदे कल्पते—

क्वचिन्मल्ली - वल्ली - तरल-मुकुलोद्भासित-वना
क्वचित् पुष्पामोद-भ्रमदलिकुलाबद्ध-वलया ।
क्वचिन्मत्त - क्रीडत्परभृत - वधू-ध्वान-सुभगा
क्वचित् कूजत्पारावत-वितत-लीला सुललिता ॥

# धर्माभ्युदयम्

धर्माभ्युदयस्य नामैकाङ्कस्य श्रीगदितोपरूपकस्य प्रणेता मेघप्रभाचार्य कदा कुत्राविर्भूत इति नाद्यावधि निर्णीतम् । जैननाट्याना बाहुल्यकाल तावद् द्वादशी शताब्दीति मेघप्रभोऽपि तत्रैव निवेशनीय । धर्माभ्युदयस्य हस्तलिखिता प्रति १२७३ वि० सवत्सरे प्रणीता । तत प्रागेव रचितमिद नाटयम् ।

पुस्तकान्ते कवि स्वकृति छायानाट्यप्रबन्ध कथयति । पात्रस्थाने प्रतिमादिक निवेश्य कृताभिनय रूपक छायारूपक भवतीति नाविदितचरम् । धर्माभ्युदय प्रथम पार्श्वनाथजिनेन्द्रमन्दिरे यात्रोत्सवावसरेऽभिनीतम् । इद च श्रीगदित नामोपरूपकम् । तच्च विश्वनाथेन कृतलक्षणम्—

> प्रख्यातवृत्तमेकाङ्क प्रख्यातोदात्तनायकम् ।
> प्रसिद्धनायिक गर्भविमर्शाभ्या विवर्जितम् ।।
> भारतीवृत्तिबहुल श्रीतिशब्देन सकुलम् ।
> मत श्रीगदित नाम विद्वद्भिरुपरूपकम् ।

इत्येवलक्षणलक्षितं धर्माभ्युदय पञ्चविंशतिकृत्व श्रीशब्देन सश्रीक पश्याम । एकाङ्कोऽत्र पञ्चधा विभक्ते प्रथमे दृश्ये राजा मन्त्री च सवदत । द्वितीये इन्द्र शची बृहस्पतिश्च, तृतीये नन्दनचन्दनौ, चतुर्थे राजमन्त्रिणौ पुनरपि च पञ्चमे मदनो रति प्रीतिस्तथा परस्तात् पुरन्दरकुतूहलप्रभृतयो दर्श्यन्ते । जैनसमय शास्तुमस्य निर्मितिप्रयास ।

वाराङ्गनाभिरुपासितो राजा दशार्णभद्रो दाने रणे तपसि च लब्धयशा सपरिजन सिंहासनमधिष्ठितोऽमात्यमुवाच—

> कदा मुदाश्रुभि प्लाव्यो मिथ्यादर्शनकश्मल ।
> देवदेव नमस्कृत्य वीर मम शुभोदये ।।१७

तदानीमेवोद्यानपालाद् वर्धमानमागतमुद्यानस्थे दशार्णकूटे कृतविश्रम देवैर्मनुजैश्च स्तूयमान च श्रुत्वा राजा सिंहासनादुत्थाय बद्धाञ्जलिरस्तौत् । ततोऽधिष्ठाय सिंहासन राजा शक्त्या भक्त्या चात्मानमुत्कृष्ट मन्यमान सातिशय सपन्नेन विधिना श्रीमहावीरमभिवादयितु प्रस्थानायामात्यमादिष्टवान् । अथागतेन पौरमण्डलेश्वरेणानुयातोऽसौ करीन्द्रमधिरुढो-

ऽनुव्रजद्भिश्चतुरङ्ग-सैन्य-सहस्रैः प्रस्थितोऽमात्यं पार्श्वस्थमपृच्छत्— सौधर्मेन्द्रोऽप्यागतो भवेत् कच्चिदिति। संभाव्यत इति प्रतिवचनेन तममात्यः सम्भावयामास।

तावदेव सौधर्म इन्द्रो दशार्णभद्रस्याभिमानं विज्ञायैरावतं नाम स्वगजेन्द्रं तथा सज्जयामास यथा तं दृष्ट्वैव राजा कातर्यं गतः। कथमिन्द्रं मिलेयं कार्पण्योपहत इति स चिन्ताकुलो निर्णीतवान्—

न यावदायाति पुरन्दरोऽयं वेगेन तावज्जिन-वीर-पार्श्वे।
गृह्णामि दीक्षां कृतसाधु-शिक्षां पश्चात् तथा दर्शनमस्तु तेन ॥३०

इति क्षणादेव दीक्षितः। तदनन्तरमेव यतिवेषः पुत्तलस्तत्र निधापितो राज्ञः स्थाने।

अथ रति-प्रीतिभ्यां प्रविश्य कामः सगर्वं वल्गति स्म —

हृदि धत्ते हरिर्लक्ष्मीमर्धनारीश्वरो हरः।
देवा मदाज्ञां कुर्वन्ति मनुष्याणां तु का कथा ॥ ३२

इति श्रुत्वा प्रीत्या निवारितोऽपि कुसुमायुधः तं शरव्यं करोति। स कामः राज्ञो ध्यानानलेन तप्तो मूर्छितः। इन्द्रो विज्ञाय तं पीयूषधारया विगतज्वरं लब्धसंज्ञं कृत्वादिष्टवान्—

सात्त्विकव्रतधारिणां चारित्रिणामन्यदापि मा स्म संरब्धो भूः।

इन्द्रस्तावद् दशार्णभद्रं नमस्कुर्वन् प्रोक्तवान्—

अहो मूर्तिरहो मूर्तिरहो स्फूर्तिः शमश्रियः।
वीतरागप्रभोर्मन्ये शिष्योऽभूदेष तादृशः॥

रंगे मूर्तिरेव विराजमानासीत्।[1] इन्द्रेण पृष्टो वृहस्पति व्याख्यातवान्। दीक्षाक्षणादारभ्य केनापि साकमनाभाषमाण. समुज्ज्वलगुणकाष्ठतामास्थितः प्रतिपन्नमौनध्यान इवोपलक्ष्यते।

इन्द्राज्ञया राजकुमारोऽभिषिक्तः।

---

१. चीनदेशे कवुकीनाटकेषु अभिनयस्य परिणतिविन्दौ नायको मूर्तिवत् प्रतिभातः। तथाहि In Kabuki plays the climax of a piece of acting is accentuated by an impressive pose in which the actor becomes statuelike with his eyes wide open. Mie is the name of this pose which heightens aesthetic appeal. Sobel : The Theatre Handbook, Page 30.

## वत्सराजस्य नाटकानि

किरातार्जुनीय व्यायोग, कर्पूरचरितं भाणो, रुक्मिणीहरणमीहामृग-स्त्रिपुरदाह डिमो, हास्यचूणामणि प्रहसनं, समुद्रमथन समवकारश्चेति वत्सराजस्य कृतयो विलसन्ति। कालञ्जराधीशेन परमर्दिदेवेन तत्पुत्रेण त्रैलोक्यमल्लेन च समाजितोऽस्य कविराज तयोरमात्यो बभूव। परमर्दिदेव ११६५ ख्रीष्टाब्दत १२०२ पर्यन्त कालञ्जर वीरभूमि शशास, ततश्च १२०५ ख्रीष्टाब्दत १२४१ पर्यन्त त्रैलोक्यमल्ल प्रजापालकोऽभवत्।

नवमी शताब्दीमारभ्य आ त्रयोदश्या कालञ्जरा मध्यदेशे वीरप्रसूत-योऽप्रतिमाना काव्यप्रतिमाना भूमयश्चासन्। अत्रत्याना चन्देलराजाना प्रथमस्तावज्जयशक्ती राजाभूद् यस्य नाम्नाय प्रदेशो जेजाकभुक्तिरित्यगी-यत। द्वितीयो महान् विजेता यशोवर्मा दशम्या शताब्द्या बहून् भारतभागान् विजित्य खजूराहोगे विष्णुमन्दिर निरमापयत्, तत्रैव जलाशयमपि कारित-वान्। तस्यात्मजो धङ्ग पितुरपि भूयान् प्रतापेन ९८९ ई० मध्ये राज्यसघ-समवेत 'सुबुक्तगीन' इत्येतेन सह रणलीला चकार, खजूराहोगे देवालया-श्चापि निर्मापयामास। तदात्मजो गण्ड प्रतिहारनरपति राज्यपाल दण्डयितु १०१८ अब्दे स्वपुत्र विद्याधर ससैन्य प्रस्थापयति स्म। विद्याधरे च १०१९ वर्षे राज्यासीने तच्छासनावधौ 'महमूदगजनवी' इत्यनेन द्वि कालिञ्जरा आक्रान्ता। पश्चादेतद्वश्य कीर्तिवर्मा प्रसिद्धिमगाद्, यदाश्रयेण प्रबोधचन्द्रोदयस्य प्रथमोऽभिनय सम्पन्न। १२२९ ख्रीष्टाब्दमभितोऽस्य वशस्य प्रदीपो मदनवर्मा गीतविजयश्लोको 'महोबा' पुरे मदनसागर नाम बृहत् सरोवर खानयामास। एतेषां राज्ञा परम्परामनुपालयन् ११६५ वर्षे परमर्दिदेवो राज्यधुर स्वीकृतवान्। बहुश स पृथ्वीराजचाहमानेनायुध्यत। १२०२ वर्षे ऐबक कुतुबुद्दीन काल ञ्जरानाक्रम्य जितवान्। १२०५ वर्षे पुण्यश्लोकप्रतापो विजयश्रीवृतस्त्रैलोक्य-वर्मा कालञ्जरान् स्वाधीनाश्चकार।

उक्तेन विवरणेन भारतभुवस्तत्समये युद्धजर्जरतानुमीयते।

राजामात्य कवि परस्पर विजिगीषून् भारतभूमे शासकानव-लोकयन्—

औदार्य-वीर्य-रसिकाः सुखयन्तु भूपाः । स० म० ३.१४
न्यायोपाय-प्रवृत्ता अवनिमवनिपाः पालयन्तु प्रसक्ताः । किरा० भरतवाक्यम्

इति सन्दिशति ।

क्षत्रियाणां कृते धर्मरक्षामुपदिशन्नसौ तपःपूतत्वमायुधव्रतं च पुरस्करोति

एकः करः फलयति स्फटिकाक्षमालां
घोरं धनुस्तदितरश्च बिभर्ति हस्तः ।
धर्मः कराल-कलिकाल-कदर्थ्यमानः
सत्क्षत्रियस्य शरणं किमिवानुयातः ॥ किरा० ३६

मध्यकाले कविरमात्य इति विलक्षणोऽयं मणिकाञ्चन-योगो वत्सराज-मुत्कर्षभाजं विदधाति । काव्यकौतूहलो ह्यसौ समसामयिकस्य कान्यकुब्जाश्रितस्य महाविदुषः श्रीहर्षस्य सनाभितां वहति, सान्धिविग्रहिकश्च भवंश्चाणक्यं स्मारयति ।

## किरातार्जुनीय-व्यायोगः

महाभारतीयां कथामाश्रित्य भारविणा कृतं किरातार्जुनीयं नाम-महाकाव्यं वत्सराजस्योत्प्रेरकं लक्ष्यते । श्रव्यस्य प्रबन्धस्य दृश्यतां कवयन्नसौ यथापेक्षं परिवर्तयति, नवं कल्पयति, युगानुरूपं चादधाति स्वादुत्वम् । अस्त्येव कश्चिद् वाग्विशेषो येन रसिकानां मनसि प्रत्यग्रेव कापि रसस्फूर्तिरुज्जागर्ति सर्वाङ्गीणं परिष्वजमाना ।

वीररसोचितायां रचनायां कौशलं सन्दर्भयन् वत्सराजः कस्य प्रीतये नास्ति । अहो अस्य प्रसादगुणाग्रहः —

अपार्थः पार्थोऽहं धनुरधिगुणं निर्गुणमिदं
विसारा एतेऽपि प्रसरणपराः सम्प्रति शराः ।
न यावन्नो राजा समरभुवि कौरव्य-बलव—
त्कबन्धानां नृत्यैरनुभवति नेत्रोत्सवसुखम् ॥

अस्त्येव किंचित् कविकर्मलाघवं यद् विरोधाभासेऽपि अविरोधि भवति रससिद्धेः । अपि च वराहवर्णने—

कुद्दालीयति सान्द्रकन्दपटले, वाढं कुठारीयति
स्कन्धाग्रेषु, परश्वधीयति शिखाशाखासु सम्पातिनो ।
दंष्ट्रेयं विकटाकिटेः प्रतिपदं मार्गद्रुमद्रोणिषु
क्रूरक्रूरपराक्रमप्रणयिनो किं किं न सम्पद्यते ॥

इति नामधातूना प्राचुर्येऽपि प्रासादिकता नैव हीयते ।

अपार्थाधीनामेव कामावाप्तिमुद्दिशन् वत्सराज इमं व्यायोग विरचितवान् । अत एवायं वीररसमेव प्रधानीकृत्य प्रस्तावयति—

येनोत्तम्भित-दुर्मदान्धकतनुच्छत्रस्य दण्डायितं
यत् प्राप्यायुधमङ्गनापि दनुजध्वंस चकाराम्बिका ।
यद् दृष्ट्वैव विडौजसो लिखितवद् दम्भोलिरासीत् करे
चन्द्रार्धाभरणस्य तद् भगवत शूल शिवायास्तु व ॥

## कर्पूरचरितभाण

कर्पूरचरिताख्यो भाणो ग्रन्थ्यग्रम्यापग कृतिर्नीलकण्ठयात्रामहोत्सवे समवेताना विदग्धरसिकानामभिलाष पूरयितुमभ्यनीयत प्रातःकाले । अत्र विदेशादागतस्य कर्पूरकनामे नाम धूर्तस्य चन्द्रकेन धूर्तेन सहालाप आकाशभाषितरीत्यावर्जित । छद्मप्रकारेणैव मेहान्ति कार्याणि काम-राम विष्णुप्रमुखा देवा अपि साधयन्ति ! इति धूर्तधर्मे प्रतिमान स्तुवन्नेकाकी द्यूतशालामभिव्रजन् कर्पूरक चन्दनकेनाभिमुखायाते न मन्दाहूतेन द्यूतागारेऽनुपस्थितस्य ते मुखमपि न द्रष्टुमीहे, किमिव त्वमेतावन्ति दिवमनुपस्थितो द्यूत छलयमोत्सुक्तो दारिद्र्योपहतत्वान्नागन्तुमुदसहे' इति प्रत्युवाच । विलासवत्या मनपिन-स्वमुमनोमालस्य कि ते हीयते ? इति चन्दनकेन प्रेरित कर्पूरक क्रोडगता वीणा दर्शयन्नवोचत्—

अनया वादिनया मे प्रिया गायति—

रतिरमणप्रियसुहृदा शशाङ्कसुभगेन निर्वृतिकरेण ।
कर्पूरकेण वियोगो भगवति रक्षाणि मा भवतु ॥१०

अथ च पीनपुष्येन द्यूते दत्तपराजया विलासवती समाश्लेषणमजैषमिति, इय विलासवती चन्द्रमसो व्याजेन मामुपालभत इति च सौभाग्य स्वमुख-कन्दरेण बहिर्गमयन्नसो भूयिष्ठ स्वाचरितपूर्वं धूर्ताचार वर्णयितुमारेभे ।

कविकर्मकौशलमलङ्कारनैपुणीमनुरुणद्धि । सा च वत्सराजमुनुरञ्जनी चकास्ति । यथा—

इहास्ति नून तुहिनांशु-बिम्बे कलङ्कधूमानुमितो हुताश ।
अस्याधुपूर क्थम यथासौ ज्वालावली-डम्बरमातनोति ॥१२

अनेन भाणेन कविर्धूर्तवञ्चनाजालादात्मानं रक्षितुमुपदिशति लोकम्—

उत्सङ्गे सिन्धुभर्तुर्वसति मधुरिपुर्गाढमाश्लिष्य लक्ष्मी—
मध्यास्ते वित्तनाथो निधिनिवहमुपादाय कैलासशैलम्।
शुक्रः कल्पद्रुमादीन् कनकशिखरिणोऽधित्यकासु न्यधासीद्
धूर्तेभ्यस्त्रासमित्थं दधति दिविपदो मानवाः के वराकाः॥

## रुक्मिणीहरणेहामृगः

वत्सराजस्य कृतिरेषा रुक्मिणीहरणाख्य ईहामृगो वर्तते। विरला एवेहामृगा लभ्यन्ते। भासस्य प्रतिज्ञायौगन्धरायणमीहामृगो निगद्यते कैश्चिन्न सर्वसम्मतिं दधाति। शास्त्रे पूदाहृतास्ते न प्रावाश्यमायान्तीति वत्सराजस्येयं कृतिर्महत्त्वं भजते।

हरिवंशपुराणे भागवतादौ च कथानकमिदमीहामृगोपयुक्तमेव वर्तत इति तत एवादाय वत्सराज ईहामिमां रूपयति। मूलकथायां सुबुद्धि-सुवत्सला—गरुडादीनि पात्राणि चित्रप्रकरणं च विनियोज्य स्वयंवर-गन्तुकामानां राज्ञां यात्रावर्णनं च प्रकल्प्य नवतामभिनयोत्कर्षं च सम्पादयति कविः।

एकोक्तयो, निरर्थकघटनागुम्फनेन अर्थोपक्षेपकैश्च रूपकमिदं बृहदीकृतम्। काव्य-योजनालोभोऽपि वत्सराजं विस्ताराय प्रयोजयति। यदि काव्यसौष्ठवमुन्मीलयितुमेवाग्रहस्तर्हि साफल्यं भजत्येव कविः। यथा गरुडः शक्तिं विकत्थते—

पक्षानिलैः प्रसभमम्बु निधिं धुनोमि
त्वं चेदधोभुवनजिष्णुतयोत्सुकोऽसि।
उत्कण्ठितोऽसि यदि तेषु तदानयामि
तानिन्दुशेखर - विरञ्चि - पुरन्दरादीन्॥४.२१

## त्रिपुरदाहं डिमः

वत्सराजस्य चतुरङ्कोऽयं डिमस्त्रिपुरदाहं रचितपूर्वस्य कस्यापि डिमस्यानुपलब्धेरैतिहासिकदृष्ट्या महत्त्वं भजते। पौराणिकं कथावस्तु दृश्यरूपेण प्रणयन् देवानां संघबद्धं प्रयासं निबध्नन् नारदादीनि कपटपात्राणि कपटत्रिपुरीं च ग्रथयन् कविः तात्कालिकीं रुचिं राजनीतिकीश्च स्थितीरनुवदति। दशम्यां शताब्द्यां राजसंघं निर्माय धङ्गेन यथा सुबुक्तगीनः पराभूतस्तथा देवा अपि संघशक्त्या त्रिपुरं विजेतुं प्राभवन्निति।

नाट्यशिल्पमधिकृत्य केचन विशेषा परिलक्ष्यन्ते। यथा त्रिपुरदाहस्य प्रथमयोरङ्कयोरधमपात्रद्वयकृतोऽर्थोपक्षेपको विष्कम्भकनाम्ना दर्शित। शास्त्रदृशा तेन प्रवेशकेन भाव्यम्। रङ्गमवतरिष्यत पात्रस्य पूर्वसूचना केनापि व्याजेन ददत् कवि पूर्वनाट्यकारानतिशेते। अत्र चूनिकाभिर्भाविभूत-घटनाना सूचनापि भूयसी कृता। कपटपालाणा कूटनारद-ब्रह्मादीना प्रयोग किमपि औत्सुक्यं वर्धयन्तीमभिख्या तनोति। तृतीयेऽङ्के सर्वतापो दानव आग्नेयास्त्र प्रयुङ्क्ते। तन्निवर्हणाय कुमारेण वाणवर्षा तन्यत इति रंगे युद्धाभिनयो सविशेष एव। किं च स्वप्नशकुनादय पूर्वसूचनायै प्रयुक्ता नव्य तत्त्वमेव। छायात्रिपुर्या कूटत्रिपुर्या वा समायोगेन छायानाट्यत्व स्पष्टमेव शोभते। हिमालयोऽपि मानवरूपो भाषते। यथा,

अहह किमिह कुर्मो नायकस्यामराणा
कुलिश-दलित-पक्षा पङ्गवो यत् कृता स्म।
असम-जय-मराढ्या स्वैरमुड्डीयमाना
किमु त दनुजसार्थं खेचरं चूर्णयाम ॥ १ ३५

समेषा राज्ञा सघ एव विजातीयेषु जयिनी श्रियमधिकरोति, नैक कोऽपि प्रभुरिति सामयिक सन्देश दधाति कवि —

वैकुण्ठ पद्मजन्मा त्रिदशपरिवृढ पावक प्रेतनाथो
रक्षो धारामधीश पवनधनपती धूर्जटि कुमार।
धर्मं शेषाद् विरामावहमपि तरल योद्धा कौतुकार्यो
मामेवैक किमित्थं त्रिपुरवधविधौ श्लाघसे भारत त्वम् ॥ ४ २२

## हास्यचूडामणिप्रहसनम्

अङ्कद्वयात्मक वत्सराजस्य हास्यचूडामणिप्रहसनमनुत्तमा कृतिर्भगवदज्जुकीयादनन्तर प्रशंसिनमर्हति। नीलकण्ठयात्रोत्सवे प्रभातवेलायामस्याभिनय परमर्दिदेवेन कारित। प्रहसनकथानुसारेण कपटकेलिर्नाम वाराङ्गनामाता प्रातरुत्थिता चेट्या तद्रात्रौ चिरसञ्चितमाभरणराशि चोरैरपहृतमूचे। न द्वारमनावृतकपाटं न च भित्तौ सन्धि कथं केन चोरितमिति चिन्तयमाना सा कल्पयति—दुहितुरनुरागभाजनेन कालकरण्डेन नाम द्यूतकरेणेद चौर्यं कृतं भवेदिति। ततो जीर्णोद्यानमठमधिवसन्त ज्ञानराशि स्तेय-रहस्य ज्ञानायानुचरेण मुद्गरकेण सार्धं गता। मुद्गरकश्च तद् वृत्तमाकर्ण्याविदत्—

आणताण समक्ख णाअरलोआण मुसदि सव्वस्स।
हेत्ताए अम्ह अम्बे कधेहि चोरो अवए सरिसो ॥

इति तौ मठमधिगतौ। मठान्तरे ज्ञानराशिं पुरुषद्वयेन विवदमानं दृष्ट्वा मुद्गरकस्तमध्यापयन्तं प्राजानात्। प्रतीक्षमाणौ तौ श्रुतवन्तौ—

ज्ञानराशिः—श्लोकद्वयं कण्ठगतं कृतं कच्चित्?
शिष्यः—ज्ञानराशे, न कण्ठगतमेवापितु तदुदरमधितिष्ठतीदानीम्।
ज्ञानराशिः—किं मां नामग्राहं ब्रवीषि?
शिष्यः—किं भवतो नामग्रहणमपि पातकम्?
ज्ञानराशिः—रे रे मूर्ख, गुरोर्नाम न गृह्यते।
शिष्यः—तत् किमिति पर्वतानां नाम गृह्यते? ते तु गुरुतमाः।

अथ शिष्यः श्लोकं पठति स्म—

आलोच्य सर्वगात्राणि विचार्य च पुनः पुनः।
इदमेकं तु निष्पन्नं ध्येयो नारीजनः सदा॥
नमस्ते पाण्डुरैकाक्ष नमस्ते त्रिरवतापन।
नमस्तेऽस्तु मृषाकोश महागुरुपकूर्चक॥ १.११-१२

पाण्डुराक्ष इति स्वस्यैव परिहासं मत्वा गुरुः शिष्यं ताडयितुमुद्यतः। दुर्भाग्योपहता अध्यापकाः स्वतो मेधीयांसं शिष्यं न सहन्त इत्युक्त्वा ततोऽपसरन् शिष्यः कथंकथमपि गुरुणा शमितः श्लोकानां परुषाक्षराणां रटनमुपेक्ष्य केवली विद्यां दातुं निवेदयामास। अशुभेयं केवली विद्येति कृताभिप्रायो ज्ञानराशिरुवाच—

दिव्ये शुद्धिकृता व्यलीककथनाच्चौरेण तातो हतो
भ्राता मे विननाश कालफणिना दष्टो निधानं खनन्।
युद्धज्ञान-विपर्ययान्नृपतिना हन्तुं समाकांक्षितो
जातोऽहं भगवानियं कुलरिपुर्विद्या हि नः केवली॥ १.१७

तथापि ते केवल्या रहस्यं वदामि—

किं वाग्भिर्निकषो हि नः फलमिति स्याद् गूढगर्वग्रहः
प्रश्नेष्वाविलमुत्तरं विरचयेन्न व्याहरेन्निर्णयम्।
सिद्धं कार्यमवेक्ष्य निश्चितमिदं पूर्वं मयासीदिति
स्फारं स्फारमुदीरयेदुपचरेत् कंचिन्मृषासाक्षिणम्॥

इति दिशा प्रवर्तते कथानकं प्रहसनस्य।

हास्यचूडामणि-प्रहसनं परिगणितेषु संस्कृत-प्रहसनेषु चूडामणिं चुम्बन्-

नामसार्थक्यं दधाति। शृङ्गाराभासोऽत्र सलिल इव प्रवाहो न क्वापि हास्यरस-मतिशयानो मर्यादामतिक्राम्यति। इदं च रूपकं लोकस्य दुष्टप्रवृत्तिमलानां भाण्डमिव स्फोटयन् कलुषं पुरत एव स्मारयति। क्वचित् क्वचिदेकोक्तयो मनो हरन्ति यथा मदनसुन्दरी कामावेशवशीकृता वदति—

मुञ्चाना सहकारकोरकविषं भ्रान्ति प्रपञ्चया
कण्ठे कोकिलयोषिता नव-कुहू-शब्दाग्निना दह्यते।
श्रीखण्डानिल-कालकूट-पवनैर्मूर्च्छन्ति मेना सना
धिङ् मृत्योरसमर्थना स्मरशरैर्विद्धापि जीवाम्यहम् ॥

## समुद्रमथन-समवकार

वत्सराजस्याद्भुतग्रथितं समुद्रमथननामा समवकारकोटिक प्रथम रूपकम्। परिमर्दिदेवस्य परितोषायैव प्रत्यूषेऽस्यानीयत। कथानकं तु पुराण-प्रसिद्धमादाय कविना रूपकमिदम्।

देवा असुराश्च समुद्रमथनेन भूयिष्ठां रत्नोपलब्धिं सम्भाव्य ब्रह्म-हरि-हरैः सम्मन्त्र्य मन्दरेण मन्थनीकृतेन प्राक्रामन्त यथाविनियोगम्। विष्णुपदी समुद्रपत्नी लक्ष्म्याश्चित्रं विष्णुं तस्य च तां दर्शयित्वा परस्परेण स्पृहणीयतां निनाय। जलकुञ्जरमारूढा लक्ष्मी रुद्राणीं पूजयितुं लज्जाधृतिभ्यां समुद्रा-दुज्जगाम। अर्चन्ती च सा गाथां पपाठ—

सह कम्पिदा सि पव्वदि लच्छीए विविहकुसुमसारेहिं।
अच्चेसु तुम पसाओ जह कण्ह पअणरमत्तेहिं ॥ ११८

इत्यनन्तरं परिचरेणार्पिते चित्रे सा कृष्णमपूजयत्। ततो वात्याचक्रेणा-न्धीकृतदशदिशा वृक्षानुत्पाट्य नभो नयता भीपिता लक्ष्मी सागरोऽन्तर्गता।

अथ वृत्ते मन्थने लक्ष्मीर्विष्णुमभि, अमृतमसुरानभि, विषं च शिवमभि वृतम्। नाम्ना मोहिनिका कपटकामिनीरूपो हरिरसुरान् प्रवञ्च्य सुधां ग्रहीतुं गरुडेन निपुणिकानाम्ना सख्यानुयातो ययौ। तत्र च वनि कुञ्जस्थेन परिचरेण सद्वितीयं प्राप्त। कामिनीं तां प्रेक्ष्योत्कमना स निपुणिकया सूचित— लक्ष्म्या इयं स्वसेति। पुनश्च तां स्वप्नदृष्टं युवानं प्रत्यासन्नामवोचत्—

अण्णाहि कण्णअं का संपदि का मलआघवह।
का जीविदे सतण्हा कलअण्ठ-कुहू सुणि सुणइ ॥ २५

किंच, त्वामेव ननु सा स्वप्ने ददर्शेति च निशम्य वले रागो ऽवर्धत। अत्रान्तरे सुधाप्राशनायाहूतो वलिः। तत्र शुक्राचार्यो वलेर्मुखात् प्रणयवृत्तं श्रुत्वा तं सम्यक् प्रोत्साहितवान्। नेपथ्ये तावदेव श्रूयते स्म - युद्धे दानवाः सर्वे पराजिता देवैर्दिशो नीताः, समुद्राच्च लब्धं रत्नजातमाच्छिद्य स्वायत्तीकृतमिति। आकर्ण्य च वलिः सुधाकुम्भं मोहिनिकायां निक्षिप्य देवान् विजिगीषुः स्वसैन्यान् सर्वांश्च सहायानामन्त्रयांवभूव। सा मोहनिकां सप्रणयमुवाच—

पीयूषमेतद् दयिते गृहाण
त्वमेव पीयूषमिदं वृथा मे।
सम्पूर्णकामा कतिचिन्मुहूर्तं—
भव प्रिये, यामि रणोत्सवाय॥ २.१२

इति कलशमादाय सा द्वित्राणि मुहूर्तानि त्वां प्रतीक्ष्यानागते त्वयि निरुपायमिदं शरीरमग्निसात् करिष्यामीति तं सान्त्वयांवभूव। गते वलौ विलम्बिते च तत्प्रत्यागमने मोहनिकाग्निमाहूय कृततत्प्रवेशनिश्चया वभूव शुक्राचार्येण प्रत्यागमिष्यन्तं वलिं प्रतीक्षितुमुक्तापि मैवं वदाचार्य, इति ब्रुवती प्रवेशं च नाटयन्ती प्रविलुप्ता। शुक्रोऽशोचत्—

धिग् धिक् सुधां वार्धि-विलोडनोत्थां धिग् धिक् च तद् दुर्लभ-वस्तु-जातम्।
किं नाम नाप्तं दनुज-प्रवीरैः—वैकुण्ठ यत् त्वं महिलीकृतोऽसि॥ २.१६

ततः शुक्रः शिवरूपमात्मनो विधाय विष्णुं प्रति प्रावोचत्—
कृष्ण कृष्ण विलीयन्ते ममाङ्गानि विषोष्मणा।
देहि देहि तदेतन्मे पीयूषं किं विलम्बसे॥ ३.७

इति शृण्वन् भगवति शिवे कः कालकूटस्य प्रभाव इति विमृशन् ध्यानेन शुक्रं कपटशिवरूपं जानन् निर्भर्त्स्यापसारयामास हरिः।

अथ समुद्रः शिवेनानुज्ञातो विष्णवे लक्ष्मीं कौस्तुभं च, वरुणाय वारुणीं, सर्पेभ्यो विषमग्नये च पीयूषं विभज्य ददौ।

———

## प्रसन्नराघवम्

सप्ताङ्कस्य प्रसन्नराघवस्य नाम नाटकस्य कर्त्ता जयदेव पीयूषवर्ष-कवीन्द्रोपाधिभूषित स्वकृतेश्चन्द्रालोकस्य कृते ख्याति वहन्त्रयोदश्या ख्रीष्ट-शताब्द्या प्रादुर्बभूव। सिंहभूपाल (१३३० ई०) स्वकीये रसार्णवसुधाकरेऽस्या-वतरणद्वय सगृहीतवान्।

अत्र रामविवाहात् रामायणी कथा रावणविजयपर्यन्त विलसति।

> प्रथमङ्कुमङ्कुरितसर्वरसावतार नव्योल्लसत्कुसुमराजिविराजिबन्धम्।
> धर्मेतरांशुमिव वक्रतयातिरम्य नाट्यप्रबन्धमतिमञ्जुलसविधानम्॥

—इति स्वयमुद्गिरन्नपि जयदेवो नैव स्वकीये नाट्यप्रबन्धे निर्वाहगन्ध बध्नाति। काव्यबन्धाग्रहो न हृदयग्राही भवति दृश्यकाव्येषु, नापि कार्यव्यापार-मनादृत्य पाठमात्रेण घटतेऽभिनय-नीति। यथा शिवधनुषि स्वबल परीक्षमाणो बाणो रङ्गमनवतार्य मञ्जीरकमापणेनैव सदृब्ध —

> बाणस्य बाहुशिखरे परिपीड्यमान मेद धनुश्चलति किञ्चिदपीन्दुमौले।
> कामातुरस्य वचसामिव सविधाने—रभ्यर्थित प्रकृतिचारु मन सतीनाम्॥

प्ररोचनापराणि वाक्यानि निर्गंध्य निग्रन्थत्व निगूहयति कवि। यथा कुब्जको वदति—"कथमय मासस्तवकोऽपि पुन सौभाग्यलक्ष्म्या उपधान-गेन्दुक" इति। इय च परिहास वृत्ति कविमसंवृतलोभ चकासयति। यथा परशुरामो राममाशिषा सवर्धयति—

> इय वास्ता धुरभञ्जर-शमित-लङ्केश्वर शिर
> भितोत्सङ्गा नन्दत्सुर नर भुजङ्गा त्रिजगती॥ ४ ४८

## वीणावासवदत्तम्

महानाटकप्रायमष्टाङ्कान्तमुपलब्ध वीणावासवदत्त केन कदाऽरचयदिति न सुनिश्चितम्। वल्लभदेव पञ्चदश्या शताब्द्या स्वकृतौ सुभाषितावलौ वीणावासवदत्तस्य नान्दीमुदाहरति। तत प्राचीनतामेवास्य सूचयति। द्वादश्या शताब्द्या रामचन्द्रेण रचितस्य नलविलासस्य नायकयो समागममनुहरति वीणावासवदत्तमिति तत परस्तात् त्रयोदश्या शताब्द्यामिद रचित भवेदित्यनु-मीयते। स्यादेतत्—गर्भनाटकं व्यक्तिद्वैधमौत्सुक्यसातत्यमित्येवमादि वीणा-

वासवदत्तं परां कोटिमाटीकयति। भासस्य रूपकेषु वा मुद्राराक्षसे वा न तथा वस्तुविन्याससामञ्जस्यं गाढनाट्यबन्धनैपुण्यं च पश्यामः।

अत्र कथानुसारेणोज्जयिन्या राजा प्रद्योतश्चित्रमण्डपे मन्त्रिणं शालङ्कायनं सूर्यदत्तं वसुवर्माणं भरतरोहतकं च समेत्य स्वप्नमकथयत्—शिवो मम दुहितुर्वासवदत्तायाः सर्वगुणगणालंकृतेन राज्ञा विवाहं भाविनमसूचयत्। वसुवर्मा वत्सराजमुदयनमेव तथा योग्यं निवेदयामास। अभिमानिने तस्मै न कन्या देयेति प्रद्योत उवाच। तस्य गर्वोऽपनेयः। तमत्र निगृह्यानीतं परीक्षेत भवान्—के वा गुणा अवगुणा वेति भरतरोहतकस्य मतमभूत्। हस्तिनो ग्रहीतुं वत्सराजो वनाय प्रस्थित इति विदितवृत्तः शालङ्कायन एव तत् सम्पादयितुं राज्ञा नियुक्तः।

आखेटको वत्साधीशो यमुनातीरस्थं शिलीन्ध्रकवनं प्राविशत्। तन्मन्त्री यौगन्धरायणः कार्यतः कौशाम्ब्यामेव विलम्बितः। सैन्याध्यक्षो रुमण्वान् पुलिन्दान् शमयितुं व्याघ्रवनं गतोऽभूत्। यान्त्रिकं नीलगजराजमारूढे शालङ्कायने सचतुरङ्गसैन्ये तत्रायाते राज्ञः प्रद्योतस्य चरो वत्सराजं संगम्य सालवने योजनद्वये भ्रमन्तं नखदन्तवर्जितं नीलं गजराजं प्रति सूचयामास। विष्णुत्रातं मन्त्रिणं तत्रैव विहाय नीलगजं ग्रहीतुमुदयनः प्रहरशेषेऽहनि सालवनं प्राप्तश्चरेण नीलगजो दर्शितः। पटहादिकं वाद्यमानं श्रुत्वा कृतकं च गजराजमाकलय्य प्रद्योतसैनिकान् पुरतो निभाल्य निग्रहीष्यमाणमात्मानं विचिन्त्य वीणामौपगायकाय समर्प्य युद्धाय समुद्यतः।

ततो वत्सराज-शालङ्कायनौ कूट-वार्ताचर्यायां निष्फलायामयुध्यताम्। सर्वेषु वत्सराजसैनिकेषु पराहतेषु विक्षत उदयनो निगृहीत उज्जयिनीमानीयत। सांकृत्यायन्याः परिव्राजिकायाः पत्रेण हतशेषेण वत्सराजसैनिकेन हंसकेन च निवेदित-वृत्तान्तो यौगन्धरायण उदयनस्य मरणं प्रति डिण्डिमघोषमकारयत्, स्वयं च कूटाक्षरबद्धं पत्रं रुमण्वते प्रेष्य मन्त्रबद्धदृष्टीनां जनानां समक्षमात्मनोऽग्निपातं नाटयित्वा भृशं निगूढ उज्जयिनीं गतः।

आपन्नविक्लवां कौशाम्बीं पाञ्चालाधीश्वरो हस्तगतविभवां चकार। युद्धात् पलायनमभिनीय रुमण्वान् आ कौशाम्ब्या आ चोज्जयिन्याः स्वसैनिकान् कृषिकर्मादिव्याजगूढान् सर्वत्र नियोजयामास। अन्तर्भेदकुशलो यौगन्धरायणो मायाच्छन्नस्वरूप उज्जयिन्यां चारेण सह वसन् विशाखेन सेनानायकेन प्रतिपालितानां सैनिकानां पञ्चशतीमाज्ञाप्रतीक्षापरायणान् स्थापयति स्म। प्रद्योतस्य प्रियं गजराजं नलगिरिं च तथोपधैर्मत्तमकारयद्, यथा सोऽतिक्रान्तसकल-

बन्धनोपायो राजपथे निरातङ्क धावन् सकल पौरजन गतागतव्यापारेषु निखिलेषु च कार्यजातेषु निरुद्यम मातङ्ग गृहगुहानिलीनमकारयत्। उदयन एव केवलस्त वशयता नेत प्रभरिति विज्ञापितोऽवन्तिनाथस्तमेव गजमाधिरुह्य जातवसौ पलायेतेति शङ्कमानो निग्रहीतु दशसाहस्री सैन्याना नियोजयामास। इत्येवमुदयन एव नलगिरि वशीकर्तु दत्ताधिकारो बभूव।

वीणा शिक्षणे वासवदत्तायै न कतमापि वीणा रोचते स्म, इति पितरौ चिन्तापरावभूताम्। पतिरेवास्यै वीणा सम्प्रदास्यतीति पितुरभिमतमासीत्। अत्रान्तरे कञ्चुकिनानीतामुदयनस्य निग्रहावसरे प्राप्ता वीणामवलोक्य वासवदत्ता स्नेहाधीनहृदया तत्पिताकथयत्—तुभ्यमेवेयमानीतेति। नलगिरि वशीकर्तु'मियमुपयुज्येतेति कञ्चुकी तामाराय गत। कोऽयमुदयनो नामेति पृष्टवती राज्ञी राजा प्रत्युवाच वीणाया अस्या असावेव पतिरिति। तदाकर्ण्य पत्नी राजपुत्री तस्मै स्नेहिनी सजाता।

राज्ञी राज्ञा सूचिता—मृगयाव्यसनाद् विमोचयितुमहमिम निगृहीत वानस्मि। वातायनेन वत्सराज गच्छन्त पश्यन्ती वासवदत्ता तदायत्तचित्ता बभूव। ता चावलोक्यासावचिन्तयत्—

> सस्नेह सविलास सव्रीड सेङ्गित सविभ्रान्तम्।
> दृष्टि निपातयन्ती मयि स्थिताग्रे मणि स्निग्धा ॥ ४ २२

पित्रोर्मु'खाद् वासवदत्तेति नाम श्रुतिनिपीत कृत्वोदयन 'वासवेन विना कोऽन्यो दद्यादेनाम्' इति पदनिष्पत्ति प्रति व्याकरण सस्मार—'वासवो देयादिति वासवदत्ता' इति। तस्य दशा सा हि—

> अमृतरसमयीव हृदयभावा—दतिमवनीततया सुरामयीव।
> शशिकिरणमयीव कान्तिलक्ष्म्या कुवलयरेणुमयीव सौकुमार्यात् ॥ ४ २३

प्रशस्त वीर्योऽमो प्रद्योतेन मनसि पुत्रीकृतोऽपि तदजानन् हस्तिना तेन वासवदत्तया सह पलायितु कृत निश्चय उदयनो विक्षिप्तवेषेण यौगन्धरायणेन पञ्चभि स्वसैनिकशतै कृतभाहाय्योऽसत्तु सूचितावसरोऽपि सम्प्रति श्रान्तोऽस्मि प्रतीक्षस्वेति निगद्य तत्रैवारमत। अथ प्रथमेन प्रणयझञ्झावेगेन पतनोत्पतनघूर्णनाकुलहृदया वासवदत्तामस्वस्थशरीरा पितृभ्या भूताविष्टा मत्वा साकृत्यायनी समाश्वासयितुमाहूता। देवकुल नीत्वा सा समन्त्रोच्चार देवावेशमात्मनि दर्शयन्ती तामुपगम्य मनोऽभ्यस्ते पूरयिष्यत इत्या

श्वासितवती। पश्चात् राजानं तां गन्धर्वगृहीतामावेद्य 'गन्धर्वाचार्य उदयन-स्तुम्बरोः शापेन मनुष्यतां गतः, तत्समीपे गन्धर्वा न प्रभवन्ति' इत्युपायं च प्रशस्य सा वत्सराज स्वतन्त्रं कारयामास।

तत उपचितवात्सल्यस्य प्रद्योतस्य सद्मसु लब्धबहुमान उदयनो विदूषक-मेकदा नाटकमेकं प्रयोजयितुं प्रोक्तवान्। तत्र यौगन्धरायणः सूत्रधारस्य, सांकृत्यायनी नट्याः, उदयनो नायकस्य, वासवदत्ता च नायिकायाः पात्रतामभि-नेष्यन्तीति विदूषकस्तद् यौगन्धरायणस्यानुमतं विज्ञाप्य नायिकया सह नर्तनेच्छां प्रकटयामास। पाञ्चालराजेनारुणिनाधिकृतां च कौशाम्बीमनूचयत्। अथ भग्तरोहतकोऽधिगम्य प्रद्योतो भवता गान्धर्वविद्यां शास्यमानां वासव-दत्तामिच्छतीति निवेदितवान्। ततः कन्यान्तःपुरं प्रविष्टाः सर्वे। उदयनश्च वासवदत्ताया अन्तःपुरं भूषयन् गान्धर्वं शिक्षयति स्म। सांकृत्यायनीसमुप-स्थितौ प्रथमं वीणां वादयन् राजा संगीतकमारभत—

चतुरुदधि-जलाम्बरां परां फलभर-पिञ्जर-शालि-मालिनीम्।
चिरमवतु नृपो हताहितां हिमगिरि-विन्ध्य-पयोधरां धराम्॥ ७.६

हविषा कृष्णवर्त्मेव वीणाशिक्षणेन प्रणयोन्मादः सानुबन्धमवर्धत। विदूषकः सुहृदमाचार्यं घोषयित्वा वासवदत्तां तस्य भाविनीमाचार्यां सम्भाव्या-नृत्यत। वासवदत्तायाः पारितोषिकाङ्गुलीयकात् प्रतिमोदकान् ग्रहीतुकामाय तस्मै मोदकान् प्रदाय नायिकाङ्गुलीयकं स्वीचकार। तेन स्पृष्टेन प्रियास्पर्श-सुखमनुभवन्नसौ चिन्तितवान् प्रणयव्यतिकरोऽयमनुमतो यदि नाम प्रद्योतस्य न-स्यादिति स कामजनितमवसादं च गोपायितुं विदूषकेण नर्मदया नाम बन्धक्या सह स्वप्रेमव्यापारं प्रचारयामास, तस्यै चोपायनानि प्रेषितवान्। चेटीमुखात् तद् विदित्वा वासवदत्ता तत्प्रियस्यैव लेखमाहरन्तीं सांकृत्यायनीं पृष्ट्वा रहस्यमजानात्। उदयनो हि सांकृत्यायनीं यमुनाह्रदे निमज्जन्ती-मरक्षदिति सा राज्ञे सदाशयास्ति। राजा तु प्रयोजनवशादेव नर्मदायां प्रेमाभिनयं दर्शयतीति सान्त्वयित्वा सा नायिकायै पत्रमर्पितवती। तत्र च लिखितं पद्यद्वयगभूत्—

दृष्टा यदा त्वमुडुराज-समान-वक्त्रे नष्टा तदाप्रभृति मे क्षणदा सुनिद्रा।
सर्वस्वमूदरतिरेव मनोहरेषु जातं निदाघदिवसैः श्वसितं समानम्॥

दहति मदनवह्नि स्नेहहव्यो मनो मे
प्रतिवचनजलैस्त्वं साधु निर्वापय त्वम् ।
वरतनु तव शय्या वेश्मदाहेत्युपेक्षा
भवति हि सुदति त्वा तेन विज्ञापयामि ॥ ८ ६ १०

इति प्रकाशितमष्टमाङ्कान्ते कथानकम्--

उदयनवासवदत्तयो कथा भासेन प्रतिज्ञायौगन्धरायणे स्वप्नवासवदत्ते चादायोत्कर्ष गमिता । कालिदासेनापि 'उदयन कथाकोविदान् ग्रामवृद्धान्' इति तस्या लोकव्याप्तिमुररीचक्रे। वीणावासवदत्ता तामेव परम्परामनुरुन्धदभिनयमयेन नाट्यविन्यासेन भवादाश्च कार्यव्यापार समर्पितान् विधायोर्पानबद्धमित्यनुत्तमं कौशलम् । अयमपरो विशेषो यदिदं कूटघटनाभिरौत्सुक्य कौतूहल च जागरयत् स्वान्त तन्मयीभाव नयति ।

## पारिजातमञ्जरी

मालवेषु धारावास्तव्यस्य मदनकवे पारिजातमञ्जरी चतुरङ्का नाटिका विजयश्रीरित्यपि प्रसिद्धाङ्कद्वयावशिष्टा धारानरेशस्य भोजस्य सरस्वती मन्दिरे समुत्कीर्णा वर्तते ।। शेषौ द्वावङ्कौ कुत इति न ज्ञातम् । अर्जुनवर्मणा भोजवश्यस्य प्रशस्तये १२१३ क्रीष्टाब्दमभित इय नाटिका रचिता । तत्रैव वर्षेऽस्या अभिनयोऽभूदित्यपि प्रायावाद । मदनो गौडदेशे कविराजो बभूव । बालसरस्वतीति स उपाधि दधार । मदनेन कृतमर्जुनवर्मणस्ताम्रपत्रद्वय १२११, १२१३, १२१४ ई० वर्षाणामुपलभ्यते । एतेन प्रमाणीभूत मदनस्य नाटिकाकर्तृत्वम् ।

नाटिकाकथानुसारेण सग्रामधुरि गुर्जराधिराज जयसिंह विजयेनाभिभूय द्विपेन्द्रमारूढो राजार्जुनवर्मा देवै पुष्पनिचयेनावकीर्णो वक्षसि निपतिता पारिजातमञ्जरी दृष्टवान् । तेन स्पृश्यमानेव सा सर्वाङ्गसौभगकान्तकलेवरा कुमारी समभूत् । नभसि चाशरीरिणी वागुत्थिता—

मनोज्ञा त्रिविशन्नेता वत्स्यामीं विजयश्रियम् ।
सदृशी भोजदेवेन धाराधिप भविष्यसि ॥ १ ६

इति श्रुत्वा राजा ता कञ्चुकिन कुसुमाकरस्य हस्ते न्यासीकृतवान् । धारागिरिमधिवसन् भार्यया वसन्तलीलया सद्वितीय कचुकी प्रमदवनमपालयत् । अर्जुनवर्म-पारिजातमञ्जर्यो प्रणयव्यापारस्तत्रावर्धत । पौरेषु वासन्तिकोत्सवे व्यापृतेषु पत्यै देवी राज्ञी सर्वकला वसन्तस्य प्रथमा मञ्जरी दत्तवती ।

कुसुममञ्जरीति नामग्राहेण विदूषकेण स राजा पारिजातमञ्जरीं स्मारितस्तामेवा कामयत।

ततो मृगमद-सिन्दूर-पाटीरक्षोद-घनसार-मिश्ररागरञ्जिते हिन्दोलक-रागान्दोलितदशदिशि चैत्रोत्सवे राज्ञे सिन्दूरमर्पयन्ती महिषी माधवीसहकार-योरुद्वाह अद्यैव सम्पादनीय इति स्मरतिस्म। अथ तत्र विवाहमङ्गलोत्सवे पारिजातमञ्जरीदर्शनोत्कण्ठाकुलमानसो विदूषकेण सह स्वाभिलापमालपन् देव्यै दाक्षिण्यं दर्शयितुं गतः। तत्र च राजदर्शनकृतमतिं निगूढं स्थितां पारिजात-मञ्जरीं तत्सखी पालिका एवं स्थापितवती, येन सा देव्यास्ताटङ्के नायकेन दृश्येत छायाद्वारेण। तां राजादर्शत्। दृष्ट्वा च स तामवर्णयत्—

उच्छ्वासि स्तनयोर्द्वयं तदपि यत् सीमाविवादोल्वणं
लीलोल्लेखि गतं तदप्यनुपमश्रोणिश्रिया मन्थरम्।
दीर्घं दृग्युगलं तदप्युपगतं लास्येन किंचिद् भ्रुवो—
रेतस्यास्तनुमध्यमं विजयते सौभाग्यबीजं वयः॥ २.५१

तदनन्तरमन्याहितमनस्कं प्रवञ्चनाञ्चितावस्थानं राजानं परिज्ञाय देवी मानावेशं गता ततोऽपासरत्। नायिकापि दूरं गता। 'यद् भूतं तद् भूतम्। भवानिह नवप्रेयसीमेव सम्भावयतु इति वदता विदूषकेण निर्दिष्टमार्गो राजा मरकतमण्डपं गतः। तत्र राजा पुष्पाणि पुनः पुनरवचित्य नायिकाया उपरि प्रक्षिप्तवान्। पुष्पप्रक्षेपैर्मोहं गता सा बाणैरवकिरन्तं पञ्चबाणमेव तं मन्यमाना सख्या प्रतिबोधिता—नासौ पञ्चेषुः साक्षात्ते प्राणप्रियोऽर्जुनवर्मा महाराज एव ते समक्षमिति एनं त्वं प्रणयेन संभावयेति च। परवशास्यास्य किं प्रेम्णेति गन्तुमेव दत्तपदां तां भुजयोरादाय मानं मोचयितुं प्रणतो बभूव। यावत् कोऽपि महिष्याः परिजनोऽन्तरा बाधयेत् तावदेव कण्ठग्रहेण गृहाणेमामिति विदूषकेणोक्तं राजानं परिष्वङ्गव्यापृतं महिष्याश्चेटी कनकलेखा तदेव ताटङ्कमर्पयितुमुपस्थिता यत्र विजयश्रीः (पारिजातमञ्जरी) प्रतिबिम्बिता सती राज्ञा दृष्टाभवत्। राजापि क्षणं द्वैविध्येन ग्रस्तः प्रेयस्यै प्रणयं निवेद्य देवीमेवानुनेतुं निर्गतः।

अस्या नाटिकाया ऐतिहासिकं महत्त्वं विद्यते, यत्रार्जुनवर्मणो गुर्जरवि-जयस्य भोजकृतस्य गाङ्गेयविजयस्य च प्रासङ्गिकी चर्चा विलसति। अत्र प्रासादिकी शृङ्गारौचित्यं वहन्ती गीतिप्रवणा शैली हर्षस्य रत्नावलीमनुहरति। नायकस्य पूर्वरागगीतिर्यथा—

या शारदी शशिकलेव कलेवरं मे
संग्राम-डामर-समुल्लसित-प्रतापम्।

लावण्यकान्तिसुधया स्नपयावतार
सा मे हृदि स्खलति मन्मथ विह्वलाङ्गी ॥११६

भवतु, पारिजातमञ्जरी, विजयश्री, कुसुमाकर, वसन्तलीला इत्येवमादीनि नामानि उत्पाद्यतामेव प्रकटयन्ति कथानकस्य। भोगप्रदया विजयश्रिया संवर्धनमपि प्रतीकार्थमिव द्योतयति। अमूर्तान्येव तत्त्वानि मानवता नीतानि कविनेति तत्प्रतिभा प्राक्तनानतिशेत एव।

## उल्लाघराघवम्

उल्लघराघवस्य नाटकस्य कर्त्ता सोमेश्वरश्चालुक्यनरपतेर्भीमदेवस्य सभामणहिलपट्टनेऽलञ्चकार। अस्य मित्रं धवलकराजो वस्तुपाल एनमस्तौत्।

यस्यास्ते मुखपङ्कजे सुखमृषा वेद स्मृतीर्वेद य —
स्त्रेता सद्मनि यस्य यस्य रसना सूते च सूक्तामृतम्।
राजान भियमर्जयन्ति महतीं यत्पूजया गुर्जरा
कर्तुं तस्य गुणस्तुति जगति क सोमेश्वरस्येश्वर ॥
उल्लाघ० १८

आशुकवि स्वयमात्मान प्रशशंस—

काव्येन नव्य पद-पाक-रसाप्लवेन
यामार्धमात्रघटितेन च नाटकेन।
श्रीभीम-भूमिपति-ससदि सभ्यलोक—
मस्तोक-समद धाराधमादधे य ॥ सुरथोत्सव १५४०

सुरथोत्सवं नाम महाकाव्यमनेन १२२७ ख्रीष्टाब्दमभितोऽरचयत्। वस्तुपालमधिकृत्य कृतस्य कीर्तिकौमुदीमहाकाव्यस्यैतिहासिकमहिमा सविशेष राजते। कर्णामृतप्रपाया २१७ सूक्तान्यमो स्वरचितान्येव समकलयत्। रामशतकेनासौ यथानाम राममस्तोषीत्। अम्बाबुंदमन्दिरप्रशस्ति ७४ पद्यैरुत्कीर्णा राजते। धवलके वीरधवलेन निवृत्त श्रीरत्नारायणप्रासादम् १०८ पद्यैरमौ प्रशशास। शैवं शाक्तं च धर्ममाश्रितोऽपि सोमेश्वरो वैष्णवाञ्जैनाश्च सविशेष ममानयति स्म।

उल्लाघराघवस्य प्रथमोऽभिनयो द्वारकामन्दिरे प्रबोधिन्यामेकादश्या सम्पन्न। स्वपुत्रेण लल्लशर्मणा प्रार्थितोऽसाविद नाटकमरचयत्। राघवान्तनामसु नाटकेषु मुरारेरनर्घराघवं मायुराजस्योदात्तराघवं जयदेवस्य प्रसन्न-

राघवं सोमेश्वरस्यचेदं नाटकमुल्लाघराघवमायान्ति। उल्लाघराघवस्य रचना-सृतौ यत्र तत्रानर्घराघवस्य शाकुन्तलस्य च प्रभावः परिलक्ष्यतेतराम्। समसाम-यिकं दूताङ्गदं नामच्छायानाटकं पर्यालोच्य जातु सोमेश्वरोऽस्य चतुर्थाङ्कस्य पुष्पिकायां छायानाटकं घोषयति। मायासीताया अङ्के प्रवेशः रामलक्ष्मण-योश्च चित्रपट्ट के रावणं प्रति समुपस्थापनं छायारूपकत्वं नार्थयतः।

कवेः सोमेश्वरस्य वाग्मिता चारित्रं चित्रयन्ती भूयं स्तुवती रस-परिपाकं च वितन्वती सम्यग् विलसति। यथा नायकस्य स्वरूपवर्णनम्—

> न क्रोधेऽपि वदत्यसावमधुरं, कृत्वापि लोकोत्तर।
> न स्याद्दुद्धुर-कन्धरो, न विधुरोऽप्यालम्बते दीनताम्।
> किं भूयः कथितेन लोचनपथं काकुत्स्थवीरः स चेत्।
> सम्प्राप्तः कुरुते रिपोरपि ततः श्लाघासु घूर्णं गिरः॥६.१०

## शङ्खपराभवः

शङ्खपराभवव्यायोगस्य यशस्वी प्रणेता वस्तुपालाश्रितानां कवीना-मन्यतमोऽभवत्। कीर्तिकौमुद्यां सोमेश्वरो हरिहरं वर्णयति—

> स्ववाक्पाकेन यो वाचां पाकं शास्त्यपरान् कवीन्
> कथं हरिहरः सोऽभूत् कवीनां पाकशासनः। १.२५

हरिहरस्त्रयोदश्याः शताब्द्याः प्रादुर्भूत आत्मानं शङ्ख पराभवं प्रशंसति—

> एकेनैव दिनेन यः कवयितुं गवतः प्रबन्धेषु च—
> द्वाचः कर्कश-तर्क-शाण-निशिताश्छिन्दन्ति वैतण्डिकान्।
> येनानेकनरेन्द्र-वन्दित-पदद्वन्द्वेन बन्दीकृता
> विद्वांसः सुकृतैकभाजनमसावस्मिन् प्रबन्धे कविः।

प्रस्तावनुसारेणा सो गौडाभिजनो गोत्रेण भारद्वाजः सोमनाथं तीर्थं पर्यट्य निवृत्तो वस्तुपालस्य गुणानुरागवशावद इमं व्यायोगं रचितवान्। अस्य च प्रथमोऽभिनयो वस्तुपालस्यैव निर्देशेन विजयमहोत्सवमुपलक्ष्य प्रयुक्तः।

'लाटानां राजा शङ्खो देवगिरिभूपतिना सिंहणेन युद्ध-परं आनीत्। तावदेव वीरधवलः स्कम्भतीर्थमधिकृतवान्। स्कम्भादित्यतीर्थं लाटानाम-वयव इति कृताभिमानः शङ्खः कटकूपं निकषा वस्तुपालेनायुध्यत। अन्ततो-ऽसौ पराभूतो भरुकच्छं प्रति पलायांबभूव।' इति कथा।

## हम्मीरमदमर्दनम्

हम्मीरमदमर्दनं नाम पञ्चाङ्कं नाटकं वीररसप्रधानमस्ति। एतत् जयसिंहसूरेर्भरुकच्छस्थ-मुनिसुव्रत-मन्दिराचार्यस्य वीरसूरिशिष्यस्य कृतिः रचनाकालश्चास्य १२३० ख्रीष्टाब्दमभितोऽनुमीयते, यदा धवलपुरे राजा वीरधवलो मन्त्रिभ्यां वस्तुपालेन तेजःपालेन च ससहायो गुजरानपालयत्। एकदा तेजःपालो मुनिसुव्रतमन्दिरं गतः। तत्र प्रभूतं च धनमदात्। तेन तुष्टो जयसिंहसूरिः प्रशस्तिपरं नाटकमिदमरचयत्। वत्सराज-नाटक-षट्कस्य स्थाने स्थाने गुप्तचराणां राजपुरुषाणां कापालिकानां च यानि चरितानि दिङ्मात्रं निर्दिष्टानि, तान्येवामुष्मिन्नाटके प्रत्यक्षदृष्टानीवालिखितानि। अत्र सामाजिका राजनीतिकाश्च घटनाः साक्षात्कृता इव भासन्ते। इतिवृत्तं चापि सर्वथैतिहासिकमेवेति दृष्ट्यापि हम्मीरमदमर्दनस्य महिमा सविशेषं राजते।

अत्र कथानुसारेण धवलपुराधीशो वीरधवलो मन्त्रिणा तेजःपालेन मन्त्रयन् विततं शत्रुजातं प्रति शङ्काभीत इव दृश्यते। तथा हि गुर्जरदेश-मण्डलेश्वरेण सङ्ग्रामसिंहेन लाटाधिपेनोद्योतितो देवगिरिनृपालः सिंहण आक्रमणाय कृतोद्यमोऽस्ति। अपरतोऽश्वसेना महती पुरस्कृत्य तुरुष्का अपि आक्रमणकामा लक्ष्यन्ते। अन्यतश्च मालवानामधिपतिराक्रमिष्यन् प्राधादिति। तावदेव प्रविश्य तेजःपालाग्रजः प्रधानामात्यो निवेदयति—तेजःपालतनयेन लावण्यसिंहेन नियुक्ताश्चरा परराष्ट्रेषु भ्रमन्तो राज्ञां गतिं जालयन्त्रिता विदधतस्तान् विद्रावयन्ति। कथं नाम हम्मीरो मर्दनीय इति ते विचारयन्ति स्म।

हम्मीरस्य चमूं मरुणामुपरि मण्डलयन्ती स्वसेनया परिभाव्य वस्तुपालो मरुदेशस्य नरपतीनां मनःसु प्रत्याशामाशङ्कां च जनयित्वा तान् स्वपक्षे विधाय वीरधवलस्य नेतृत्वेन सोमसिंहोदयसिंहधारावर्षान् सगमय्य चतुरोऽभून् सन्धीकरोति स्म। ततश्च सौराष्ट्रो भीमसिंहो महीतटस्य विक्रमादित्यो लाटानां च सहजपालो यदृच्छया राजानं वीरधवलेन सह मिलन्ति। अन्ये च राजानः सधीभूताः कूटकौशलेन निपुणको नाम चरः सिंहणदेवस्य स्कन्धावारं प्राविशत्। तस्यानुजः सुवेगो देवपालस्य मालवभूपस्याश्वपालो भूत्वा तुरङ्गोत्तमं ततश्चोरयित्वा सिंहणस्य सेनापतये सङ्ग्रामसिंहायोपानयत्। इत्थं प्रवञ्चिते सङ्ग्रामसिंहे निपुणकः सिंहणाय हम्मीरं प्रति प्रयास्यन्तं वीरधवलं ससूच्य तमाक्रान्तुं प्रोत्साहयति स्म। हम्मीरं योधयित्वा हीनबलमेव धवलकं प्रयातुमर्हति भवान्, तावत्तु ताप्तीवनान्ते कृतसैन्यसन्निवेशस्तिष्ठतु। यतो मालवान् गुर्जरांश्च

यातु राजमार्गो मिलत इति। यावत् सिंहणस्तत्र यथोक्तं गतस्तावदेव तापसवेषस्य मुवेगस्य जटाजूटात् कूटपत्रं लब्धवान्। पत्रस्य तात्पर्येण तु देवपालो मालवाधिपः संग्रामसिंहायारवप्रकाण्डमुपहृत्य प्रार्थयामास यद् गुर्जरान् प्रति कृताक्रमणं सिंहणमवसरमुपलभ्योत्सादयतु। अनुसन्धानेन सिंहणोऽवागच्छद् देवपालनामाङ्कमश्वं संग्रामसिंहेनोपयुज्यमानम्। एवमुपजापे सफलतां गते निपुणकः संग्रामसिंहं ततः पलायितुं परामृशद् येनासौ स्कन्नादित्यमनि प्रतस्थे।

अथ स्वभुजवीर्यगर्वितो मेदपाटपतिर्जयतलो हम्मीरं क्रियमाणाक्रमणमपि बुद्ध्वा वीरधवलेन सन्धिं नैवास्थापयत्। अकाण्ड एवाक्रान्तः सोऽपासरत्। हम्मीरस्य चमूर्मेदपाटं सर्वथोत्सादयामास।

तदानीं कमलको नाम धवलकस्य चारो मिथ्या प्रवादं व्यापयामास यत् वीरधवलकः सैन्यैरायातः। अनेन विधिना हम्मीरसेनां प्रभंशयांचकार तं देशं चारक्षत्। धवलकः कण्टकं हम्मीरं तुदन्तं निष्कासयितुमचिन्तयत्। "अहमेव निरारीकरोमि रिपुनृपति-गूढचर-चक्रवालम्" इति।

तत एव तेजःपालो बगदादराजं (खलीफं) प्रति चरं शीघ्रकं नाम खर्परखाननाम्नो भारतीयशासकस्य दूतं कृत्वा व्यसर्जयत्। ततोऽसौ मीलच्छीकारं निगडयन्त्रितं कर्तुमादेशं खलीफस्य व्याजेन दर्शयित्वा खर्परखानं मीलच्छीकारायाकोपयत्. मीलच्छीकारस्य पुत्रं प्रवञ्च्य खर्पराक्रमणं सन्दिश्य स्वयं तद्दूतत्वमधिगम्य मीलच्छीकारं युद्धस्य वार्तां श्रावयामास। अत्रान्तरे कुवलयको नाम चारो हम्मीरपक्षपातिनो गुर्जरमण्डलेश्वरानुपजाप्य वीरधवलस्य पक्षे पातयित्वा महासंयनिवृत्तौ प्रायस्यत्, सफलश्च बभूव। खर्पर-प्रयाणमात्रेण मीलच्छीकारस्य सैनिका हतोत्साहा अभवन्। खर्पराक्रमणात्पूर्वमेव कृताक्रमणो वीरधवलो मीलच्छीकारं प्रध्वंसयति स्म इत्येवं हम्मीरस्य सपरिकरस्य मदं हृत्वा वीरधवलो यशसा धवलयति स्म भुवम्।

हम्मीरमदमर्दनं नाम नाटकं वस्तुतो विशाखदत्तस्य मुद्राराक्षसेन समानमेव। अत्रापि कूटनीतिप्रवञ्चनाप्रपञ्चस्य तथैव विनियोगो दृश्यतेतराम्। ऐतिहासिकानि विविधानि वृत्तानि संगुम्फन् कविर्नितरां यशो भजते। तुरुष्कैः कृतो नरसंहारो नापरां प्रतिमां वांगलादेशं विहाय क्वचिदपि वहेत्। यथा—

"ततो मलिन-जन-हस्त-मरणेन न भवति गतिरिति चिन्तयित्वा गलनिगडितदड्बालानि कूपेषु पतितानि कान्यपि मिथुनानि।......; अनु प्रेक्षिष्ये मार्यमाणस्य

निजजनस्य दुःखमिति केऽपि कण्ठसंस्थापित-रज्जुग्रहाः कृतक्रन्देषु कुटुम्बेषु मरणं प्राप्ताः । " इत्यादि ।

> वस्तेषु तेषु सुभटेषु विभो च भग्ने
> मग्नासु कीर्तिषु निरीक्ष्य जनं भयातम् ।
> यो मित्र - बान्धव - वधूजन वारितोऽपि
> वस्तल्परोन् प्रति रसेन स एव वीरः ॥३,१५

## करुणावज्रायुधम्

करुणावज्रायुधं नाम श्रीगदितप्राय रूपक बालचन्द्रस्य सूरेर्वस्तुपाल-समकालिकस्य यशोध्वज इव वर्तते । अस्याभिनय प्राथमिको वस्तुपालस्य वसन्तपालापरनाम्नो गुर्जराणा महामन्त्रिण आदेशेनायोजितम् । अतोऽस्य रचना १२४० ख्रीष्टाब्दत किंचित् पूर्वमभूत् ।

कथानुसारेण जिनाधिपस्य क्षेमकरस्य पुत्रो राजा वज्रायुधो मन्त्रिणा सह धर्मचर्चापर मद्धर्मस्य स्वरूपमुदघोषयत्—

> एव जैन विना धर्मं नये धर्मा कुधीमताम् ।
> सद्गुता एव शोभन्ते पटच्चर पदा इव ॥४०

विदूषकश्चार्वाकमतमुन्नासयन् हास सृजति । अमात्योऽप्यनुमोदयतीव—

> प्रत्यक्षमनवेक्ष्यापि किंचित् तत्फलभुक्त्वलम् ।
> हित्वा विषयज शम तप कर्म करोति क ॥४४

तावदेव पूर्ववैरिणो विद्युद्दण्डस्यासुरस्य मायया राज्ञ परीक्षावसर-आगत । त्रायध्व त्रायध्वमिति कोलाहलो नेपथ्यादश्रूयत । श्येनेनानुसृत कश्चित् कपोतो राज्ञ उत्सगे शरण्योऽभूत् । राजान श्येनोऽपि कपोतमासेन स्वोदरपूर्तये निवेदितवान् । मूर्च्छितोऽसौ राज्ञा जलेन सिक्त सज्ञामलभत । दत्तान् मोदकान् 'अहं मासाशी' इति श्येनो नादत्ते । त राजावदत्—

> तुभ्य श्येन ददे पारावतेन तुलित पलम् ।
> निजमेवाधुना तेन सुहितोभव मा मृथा ॥८६

इति श्येन सत्वरं स्वीचकार । महिष्या वारितो राजाब्रवीत्—

> मायावरेण क्रिमिनेन शरीरकेण
> स्वेच्छान्नपान परिपोषण पीवरेण ।

सर्वाशुचिप्रणयिना कृतनाशनेन
कार्यं परोपकृतये न हि कल्प्यते तत् ॥८८

स्वयं कृत्वा तुलायां स्वमांसं ददति महीपतौ न पारावतेन तुल्यत्वं गतः। स शरीरेण तुलामारोहत् । तदानीं देवाः पुष्पवर्षेण राजानमवाकिरन्तः प्राशंसन् ।

जैनमतप्रचारस्तावत् तथातिशेते यथा जैनादृते जनस्यादरं न जातु सहते ग्रहीतुम् ।

अत्र विदूषककोपनिवन्धः सर्वथा वैयर्थ्यमेव पुष्णाति । राजनि स्वमांसं कृन्तत्यपि स पुरोभागी हासयत्येवेति 'सर्वे स्मयन्ते' इति स्वयमेव कविर्निवध्नाति ।

एकाङ्कं श्रीगदितमुपरूपकं सदप्यथ सविस्तरेण विष्कम्भकेण नाट्य-शास्त्रं व्यभिचरति । रङ्गमञ्चे कपोतश्येनौ संस्कृतेन भाषेते उड्डीयेते चेति न संभवति न वा परम्परामनुरुणद्धि ।

## द्रौपदी स्वयंवरम्

द्रौपदीस्वयंवरस्य कविः विजयपालो गुर्जरप्रदेशस्य महाकवीनां कुले जातः । तस्य पिता सिद्धपालः पितामहश्च श्रीपालो वभूवतुः । अयं श्रीपाल-श्चालुक्यनृपतीनां संमतो जयसिंहसिद्धराजस्य वालमित्रं विद्वत्परिषत्प्रमुखश्चा-सीत् । वैरोचनपराजयस्य नाम महाप्रवन्धस्य कर्तुः लब्धयशसः श्रीपालस्य यशस्वी पौत्रो विजयपालो भीमद्वितीयस्य काले ११७८-१२४२ ख्रीष्टाब्दमध्ये संबभूव । रूपकं चैतद् भीमाज्ञया वसन्तोत्सवेऽभ्यनीयत ।

कथानकं तावत् सुपरिचितमपि कामपि नवकल्पनाकमनीयतां वहति । स्वयंवरे राधावेधाय कृष्णोदीरितो भीमो विप्रवेषः कर्णं परशुरामदत्तेषु वाणेषु द्वयं याचित्वागतः । कृष्णस्तत्र द्रुपदेन राज्ञा आकारयितुं नियुक्तो द्रुपद-प्रतिज्ञां वेदयांचकार---

स्तम्भः सोऽयं गिरिरिव गुरुर्दक्षिणावर्तमेकं
वामावर्तं विकटमितरच्चक्रमावर्ततेऽत्र ।
आस्ते लोलस्तदुपरि तिमिस्तस्य वामाक्षितारा-
लक्ष्यं प्रेक्ष्यं तदपि निपुणं तैलपूर्णे कटाहे ॥
चापं पुरो दुरधिरोपमिदं पुरारे—
रारोप्य यो भुजवलेन भिनत्ति राधाम् ।

रूपान्तराप्युपमा जयता जयश्री
पञ्चालजा खलु भविष्यति तस्य पत्नी ॥१।१८-१९

दुर्योधननिर्देशेन राधा भेत्तुं गच्छति भूमि पतिते दुःशासने शकुनिरभ्रमस्त्वरयामास, किन्तु कृष्णेन तत्पुरतो वेतालजाल कृतमसौ दृष्टवान् ।

शिराल-बाचाल-जटाल-काल—
कराल कङ्काल-फटाल भालम् ।
उत्तालमुत्ताल - तमाल - काल
वेतालजाल स्खलयत्यल माम् ॥१।२१

इति द्रोण कर्णं चापि निरधुनोत् कृष्णो मायया । शिशुपालमपि नगूढं चपेटया भ्रंशयित्वार्जुनायासौ दत्तवानवसरम् । अर्जुनो बाणाभ्या कर्णदत्ताभ्या माकन्य प्राप्तवान् मत्स्यनेत्रभेदने ।

वीराङ्कुतरसप्रवणेऽत्र रूपके शृङ्गारचेष्टा अपि चमत्कार वहन्ति ।

वीराद्भुतप्रधानमिद नाटक भ्रान्त्या समालोच्यते यदिदं जैनसम्प्रदायानुसारि वर्तते । नात्र मनागपि जैनतत्त्वम् ।

## दूताङ्गद छायानाटकम्

दूताङ्गदस्यच्छायानाटकस्य चतुरङ्कस्य कर्त्ता सुभटस्त्रयोदश्या शताब्द्या पूर्वार्धे गुर्जरेषु भीमद्वितीयस्य शासनकाले (११७८-१२३८ ख्रीष्टाब्दमध्ये) प्रातिभमालोक प्रसारयामास । तदनन्तर त्रिभुवनपाले शासति १२४३ ई० वर्षे कुमार पाल-यात्रामहोत्सवेऽस्य प्रथमप्रयोगोऽभवत् । गुर्जरराजसभाजित सुभटश्विवर सोमेश्वरेण सुरथोत्सवे नाम स्वमहाकाव्ये कविप्रवर इति प्रशसित । अस्य नाटकस्य प्रस्तावनाया सुभट पद-वाक्य-प्रमाण-पारगवरीण इति वर्णित । दामोदरो हनुमन्नाटकेन हनुमन्त नायकमुपनिबध्य यथा यशो लेभे तथानेन रूपकेणाङ्गद प्रमुखनामापाद्य सुभट ।

अस्य रूपकस्य कथा युद्धकाण्डस्योत्तरवृत्तमनुसृत्य दृश्यचतुष्टयेन सक्षिप्य निबद्धा । रामोऽङ्गदेन रावण सन्दिशति—सीता प्रत्यर्पय अन्यथा रक्षोवंश उन्माद्यते । अन्येद्युरङ्गदो रावणं भत्रोधयति—

रे रे रावण रावणा क्षिति, बहूनेतान् वयं शुश्रुम
प्रागेकं किल कार्तवीर्य-नृपतेर्दोर्दण्ड-पिण्डीकृतम् ।
एक नर्तन दापितान्नकवलं दैत्यैन्द्र दासीजनै—
रेक वक्तुमपत्रपामह इति त्वं तेषु कोऽयोऽथवा ॥

इत्युक्तवन्तमभि रावणेन कृतोपस्थापना मायामैथिली प्रत्युवाच—

एषाऽप्युपरि कस्मात् विद्यसे राघव तद् व्रज निजं नगरम् ।
दत्ताहं निजहृदये साक्षीकृत्य मदनमेतस्मै ॥

मदर्थं चिन्तां विहाय राक्षसैराक्रान्तं भरतं रक्षेति च रामं प्रति सन्देशं जगौ । नैवं सीताऽभिजातबालोचितां लज्जां जातु विसृजेदिति वितर्कयत्येव बालिसुते कापि राक्षसी रावणमुवाच-रक्षोराज, रक्ष-रक्ष सीताम् । तत्र लतापाशेनात्मानं सा घातयति । तदा रावणो दूरं गतः ।

युद्धे रावणो हतः रामः पुष्पकेणायोध्यां प्रत्यावर्तत ।

किमिदं छायानाटकं नाम ?

सुभटः स्वयमिदं छायानाटकं प्रख्यापयति । मेघप्रभाचार्योऽपि स्वकृतं धर्माभ्युदयं नाम रूपकं छायानाट्यप्रबन्धं घोषयतीति कोऽत्र हेतुश्छायाशब्दसन्निवेशस्य । नैतादृशेषु रूपकेषु इतररूपकेभ्यो भेदकं किमपि तत्त्वं पश्यामः रङ्गेऽभिनयं छायया कृतं वक्तुमपि न युज्यते । अन्येषामपि हि तादृशोऽभिनयः सम्भाव्यते । इति वितर्के छायाशब्दस्य कोऽयं इति विचारः प्राथम्यं भजते । किन्तु ततोऽपि पूर्वमितराणामाचार्याणां संमतान्यत्र स्मरणमर्हन्ति । यथा—

डॉ० डे महोदय. स्व-संस्कृतसाहित्येतिहासग्रन्थे (पृ० ५०२-४) छायानाटकमिति सर्वात्मना-संशयितं मन्वानोच्छायाभिनेयत्व-वैशिष्ट्यमपश्यन् नास्तिच्छायानाटकं किंचिदिति घोषयति । तस्याशयोऽयमास्ते यत् तान्येवच्छायानाट्यत्वं भजेरन् यानि पटप्रतिविम्बिताकारमात्रैस्तिरोहित शरीरैरेव पात्रैरभिनीयते ,

विलसनमहोदयश्छायाभासेनाभिनेयानि वा रूपरेखामात्राणि वा रूपकाणिच्छायारूपत्वेन मनुते, येन डेमहोदयोऽपि गड्डलिका—पतितः कृत इति प्रतिभाति ।

कीथमहाभागो नैव दूताङ्गदे विशेषं पश्यति येनेदं छायानाटकनाम्नः सार्थक्यं वहेत् ।

नैतेऽधुनातना मनीषिणः परम्परामनुरुन्धन्ति न वा वितर्कयन्ति कथंकारमीदृशानि रूपकाणिच्छायानाटकान्यमन्यन्त तैस्तैः कृतिभिर्नाट्यकर्तृभिरिति । अथेदानीं रहस्यं विवृणुमः । प्रतिकृतिरत्रच्छाया मता नैव प्रतिविम्बम् । यथा च श्रुतिः—

यादृगेव ददृशे तादृगुच्यते सं छायया दधिरे—ऋग्वेदे ५.४४.६

अत्र प्रतिकृतिं छायामाह । यथा वा—

यस्यच्छायामृतं यस्य मृत्युः—ऋग्वेद १० १२१ २

इत्यमृतमृत्यू हिरण्यगर्भस्य प्रतिकृतिम्वमेव भजत । अपि च—

छायेव विश्वभुवनम्—ऋ० १ ७३ ८

इति आङ्गल-शेडो-पर्यायत्वं नैव सर्वथापूर्यतिच्छायाशब्द । यदि तथा मन्येतापि, नैव हानि । कालिदास उपमाद्वारेण समर्थयति—

रत्नच्छायाव्यतिकर इव प्रेक्ष्यमेतत् पुरस्ताद् ।
वल्मीकाग्रात् प्रभवति धनुःखण्डमाखण्डलस्य ॥

इति रत्नाना छायाकिरणाभा निगदिता । सा च प्रतिमारूपैव । अतएव मूर्तिरपिच्छाया कथ्यते । प्रतिमापर्यायत्वेऽधिगते भासकृतस्य प्रतिमानाटकस्यापि च्छायानाटकत्व स्थितम् । अथो विनन्यते—

दिङ्नागस्य कुन्दमालास्याभिनवमविधानस्योदाहरणम् ।

उत्तररामचरितस्य तृतीयोऽङ्कश्छायाङ्कत्वेनोपनिवद्धो भवभूतिना । तत्र हि सीताछायारूपमनुहरति । दर्शकास्ता पश्यन्ति, किन्तु रामेण सा प्रत्यक्ष नावलोक्यत इति । राजशेखर शालभञ्जिकामायोज्य स्वकृत्य नाटिका विद्ध-शालभञ्जिका संज्ञापयति ।

सिंहभूपाल कुवलयावली नाटिका रत्नपञ्चालिकेति नामान्तरेण व्यवहरति—तत्र हि प्रतिमानाटक इव रत्नपञ्चालिकाया अभिनव प्रयोग ।

मायामयी सीतामुपन्यस्य हनुमन्नाटकमपि छायानाटकमिति निगद्यत इव ।

उल्लाघराघवे मायासीतायाश्छिन्नशिरो रावणेन रामस्य पुरस्तात् कृत इति तन्नाटकमपिच्छायानाटकमाह सोमेश्वर ।

यशोवर्मणो रामाभ्युदये रावणो मायासीताया शिरश्छिनत्ति ।

सर्वथा प्रतिमा वा प्रतिकृतिर्वा मायाकृतिर्वा पुत्तलिका वा छायापदेनाभिमता नाट्यकृताम् । अत्र पौराणिकी परम्पराऽपि सर्वथा पोषयति न सिद्धान्तम्—सूर्यस्य तेज सोढुमपारयन्ती सूर्यभार्या संज्ञा गृहादपससार । तथा स्वप्रतिकृति 'छाया' गृहे नियोजिता । सूर्यश्च ता छाया सज्ञाममन्यत । इति मत्स्यपुराणे ११५ वर्णितम् । अत एव दूताङ्गदस्यच्छायानाटकत्व प्रति सर्वथाश्वासिमो साधुनामकरणमिति । अत्र हि प्रहस्तो रङ्गमञ्चमधिष्ठापयति मायामैथिलीम्—

"(ततः प्रविशति प्रहस्तेन सह मायामैथिली) मैथली—जेदु जेदु अज्जउत्तो (इत्यभिदधाना रावणोत्सङ्गमारोहति)"

प्रकाशजनितं प्रकाशाभावकृतमाकाराभासमेव छायां मन्वाना बभ्रमुरेव यच्छायानाटकत्वं न कुत्रापीति ।

## हस्तिमल्लस्य नाट्यानि

दाक्षिणात्योऽयं ब्राह्मणो हस्तिमल्लो महाकवितल्लजः, सरस्वती-स्वयंवर-वल्लभः सूक्तिरत्नाकरः इत्यादिभिरुपाधिभिः समलंकृत आसीत् त्रयोदश्यां शताब्द्यां तेन विपुलं नाट्यमाहित्यं संवर्धितम् । अयं हि जैनकविश्चतुर्भी रूपकैः विक्रान्तकौरवं मैथिलीकल्याणमञ्जनापवनञ्जयमिति नाटकैः सुभद्रेति नाटिकया च ख्यातः । मल्लयुद्धे बाहुबलेन हस्तिनं भुवि शयानं विधायायं स्वनामार्जितवान् । तथात्वं स्वयं श्लाघते—

श्रीवत्स-गोत्र-जन-भूषण-गोपभट्ट—<br>
प्रेमैकधामतनुजो भुवि हस्तियुद्धात् ।<br>
नाना-कलाम्बु-निधि-पाण्ड्य-महेश्वरेण<br>
श्लोकैः शतैः सदसि सत्कृतवांबभूवे ।।

पाण्ड्यभूपसम्भावनमपि अञ्जनापवनञ्जये घोषयति कविः —

श्रीमत्पाण्ड्यमहीश्वरे निजभुजादण्डावलम्बीकृतं<br>
कर्णाटावनिमण्डलं पद-नतानेकावनीशेऽवति ।<br>
तत्प्रीत्यानुसरन् स्वबन्धुनिवहैर्विद्वद्भिराप्तैः समं<br>
जैनागार-समेत-संततगमैः श्रीहस्तिमल्लोऽवसत् ।।

सन्ततगमः, सरण्यापुरं, गुडिपत्तनं, दीपगुण्डिर्वाऽस्य निवासभूमयोऽभूवन् । उदयनराजं, भरतराजं, मेघेश्वरमर्जुनराजं चेति चत्वार्यपराण्यपि रूपकाण्यसौ प्रणिनाय यानि नाद्यशावदुपलब्धानि । कर्णाट्या भाषया आदिपुराण-श्रीपुराणे तेन विरचिते ।

अस्य कृतिषु जैनधर्माग्रहलेशोऽपि न लक्ष्यत इत्ययमतिशेते प्रभूताञ्जैनकवीन् । सर्वत्र पूर्वानुरागं स्वयंवरं च समायोज्य रससिद्धिं प्रकर्षन्नसौ नाट्यकौशलेन सह परिचाययति काव्यप्रतिभाम् । अनुप्रासप्रियता तावत् कवये सुतरां रोचते । यथा—

अङ्कुरान् किसलयानि कोरकान्<br>
कुड्मलानि कुसुमानि च क्रमात् ।। सुभद्रा० १.२८

शृङ्गारवृत्ति कवि प्ररोचयति। यथा सुलोचनाया सौन्दर्य वर्णने—

शृ गारस्य गरीयसी परिणतिर्विश्वस्य समोहिनी
विद्या काप्यपरा परा च पदवी सौन्दर्य सार-श्रियाम्।
उद्दामो मदनस्य यौवनमद कुल्या रतिस्रोतसा
केलीविभ्रमसपदामविकलो लावण्यपुण्यापण ॥

विक्रान्त० १.२४

कविदृशा मर्यादापुरुषोत्तमो रामोऽपि वेशवनिता पश्यति—

प्रत्यङ्गोद्भिद्यमान-स्तनमुकुल-कृत-प्राभृताध्यैरुरोभि—
र्दं तोन्मेषोपहारे प्रहसितवदनैर्लालनीयैर्वचोभि।
विभ्रान्तोत्फुल्लनेत्रा ललित भुजलता-मन्द-विक्षेपलीला
कन्दर्प दर्पयन्त्यो भृशमिह गणिका-दारिका सचरन्ति ॥ मैथिली०

सन्तु नाम गणिकादारिका यथाभूतमेव दृष्टा, स्मरपीडितोऽपि रामो वदति—

रचय कुसुमै शय्या स्वैर विवेष्टन-शायिनी
सरस-पद्मलोपत्र — प्रान्तानिलैरुपवीजय।
स बिस-वलयान् मुक्ताहारान् मुहुर्मुहुरर्पयन्
गुरुतरममु स ताप मे वयस्य लघूकुरु ॥ २ १२

उपायैस्तथोक्तैस्तु ताप एव विधो वर्धतेतरामेव। हारास्तावन्मुक्ता-ग्रथिता एव भवन्ति, किमेतेन साधित मुक्तापदेनार्पितेन ?

## विक्रान्तकौरवम्

अत्र कथानुसारेण काशीराजस्याकम्पनस्य दुहितु सुलोचनाया स्वयवरे बहवो राजान समभ्यागमन्। तेषु मुख्यो जयकुमार कुरुराजो दिनादेकात् प्रागेव स्वयवरयात्रामहोत्सवे सुलोचनया दृष्ट। सा च तेन दृष्टेति पूर्वराग-उभयोरन्तरजायत। गगाया सौभाग्यस्नानाय नवमालिकया सख्या सहितोया पुनरपि विदूषकानुयातेन कुरुराजेन ददृशे। स्वयवरे च सर्वान् कृतस्तुतीन् राज्ञ विहाय सा जयकुमारमवृणोत्। पश्चाद् युद्ध परिणमितम्। तत्र नायको विजयी बभूव।

## मैथिलीकल्याणम्

पञ्चाङ्के मैथिलीकल्याणनाटके सीतारामयोरुद्वाहकथा वर्तते। वसन्तोत्सवं मानयन्ती काममन्दिरे दोलागृहं गता सीता रामेण दृष्टा। तयोः पूर्वरागः सपदि जनि नेमे। सखीभिराहूतायाः सीतायाः पुनर्दर्शनायोत्सुको रामो विदूषकेण सह राजप्रासादान्तिकस्थं माधवीवनं गतः। तत्र विनीतया सहागता सीता राममनावर्जितमवधार्य मोहं गता पुनः संज्ञां प्राप्ता रामेणानुनीता। प्रणयपरवशा सीता केतकीपत्रस्थलेखेन कलावत्या रामं संदिशतिस्म माधवीवनं दक्षिणेन चन्द्रकान्तधारागृहेऽद्य सायं समागम्यतामिति। तस्मिन् विलम्बमाने विनीता कृतरामवेषा सीता च माधवीवनघटनामभिनयन्तिस्म। अस्मिन्नन्तराले आगतो रामः सीतायाः पाणिमगृह्णात्। अनन्तरं स्वयंवरे चान्येषु राजसु धनुर्विजयं कर्तुमक्षमेषु गतेषु रामः समयं निर्वाह्य सीतां विधिनोपयेमे। रामस्य चारित्रमत्र नोत्कृष्टम्। तथापि सत्यमेव वदति कविः

श्रुतं यद् वा तद् वा नयति मदनोद्दीपनपदे
प्रकृत्या वञ्चित्तं गणयति च तत् तापजननम्।
यदेवादौ वाञ्छेत् तदनु तदपि द्वेष्टि सहसा
कथं पाणिग्राहो न हसति जनः कामुकजनम्॥ १.८

## अञ्जनापवनञ्जयम्

सप्ताङ्कमञ्जनापवनञ्जयं जैनपरम्परातः कथानकमुपजीव्य ग्रथितम्। महेन्द्रपुरं संपत्स्यमानस्याञ्जनाकुमार्याः स्वयंवरस्य पूर्वत एव पवनंजयो विद्याधरकुमारस्तां प्रति संसक्तमना बभूव। पवनञ्जयमभिनयन्तीमञ्जनामञ्जनानुमिकां निर्वहन्ती वसन्तमाला कृतकस्वयंवरे यावदेकदा वरमालां वरकण्ठसात् करोति, तावदेव पवनञ्जयोऽन्तर्हितपूर्वः स्वं प्रकटय्याञ्जनां पाणावग्रहीत्। अनिच्छन्ती सा मात्राहूता निर्गता। भूतार्थे स्वयंवरे स्वीकृतामञ्जनामादाय पवनञ्जय आदित्यपुरं गतः प्रमदवने तया सह विहरति स्म।

अथ पाताले वरुणेनोपरुद्धौ रावणस्य सेनान्यौ रावणकृतेनानुनयेन मुमोचयिषुः पवनञ्जयस्य पिता प्रह्लादः प्रायियासत्, किन्तु पित्रानुमतः पवन एव प्रयातश्चतुरो मासान् युद्धरत एवासीत्। एकदा कुमुद्वत्यास्तटे विश्राम्यन्नासौ पत्या वियुक्तां चक्रवाकवधूमुद्विग्नां वीक्ष्य प्रियां स्मृत्वा विमानेन गत्वा जायां संगम्य पातालं प्रत्याययौ। तेन चाञ्जना गर्भमादधे। सखीर्विना न कोऽपि तयोः समागमवृत्तमजानात्। श्वश्रूश्च तां पितुर्गृहं प्रातिष्ठिपत्।

युद्धभूमौ लब्धजयो विहितविधेय पवनञ्जय प्रत्यागतो भार्या पितृगृहगतामश्रौषीत् । गर्भवती' ता द्रष्टुकामोऽसौ कालमेघेन गजराजेनोत्पत्य यावन्नाभिगिरि गत तावद् वनेचरात् ता वन प्रविष्टामवगम्य विद्षक विद्याधरानानेतु निवर्त्यान्विष्टवान् । ततो हताश ■ मतङ्गमालिनीवने चन्दनपादपच्छाया-पविष्ट तन्मातुल प्रतिसूर्यस्तमेवान्विष्यन्नागत्याञ्जनया सगमयामास । सा हि गन्धवराजेन मणिचूडेन रक्षितप्राणा पुत्र हनुमन्त प्रसूतवती । सम्प्रति पतिप्राणा पति प्राप्य पुनरुज्जीविताभवत् ।

अथादित्यपुरेऽभिषिक्ते पवनञ्जये प्रतिसूर्यस्तस्मै हनुमन्त तनयमानीय ददौ । सर्वे सुख प्रपन्ना ।

## सुभद्रा

सुभद्राया नाटिकाया विद्याधरराजस्य नमे भगिन्या च सुभद्रया सह भरतस्य विवाहकथोपनिबद्धा । रजताचले परस्पर दृष्ट्वा प्रणयासक्तौ सुभद्राभरतावालपन्तौ वीक्ष्य राज्ञी त ध्वनिकर गन्धर्वरीतिविपर्यय मेने । एकदा विदूषकेण सह नगरी प्रविष्ट भरत सुभद्रा मिलिता । भरतेन च तस्या आलेख पुरस्कृत । तावदेव तन्निर्मित सुभद्रायाश्चित्रमालोक्य राज्ञी सिंहीनिपात निपतिताक्रुध्यत् । तौ च पृथगकरोत् । अन्येद्यु प्रियविप्रयोग-कातरामशोकमालतीलतयोर्विवाह सम्पादयन्ती सपरिवारा तामुपवने भरत पाणिग्राहेण संभावयतिस्म । तथा तौ वीक्ष्य पुनरपि राज्ञी कुप्यतिस्म । इत्येव राज्ञ्या सन्निपातितप्रत्यूहावपि तौ नमिना विवाहार्थं दत्तवचनावास्ताम् । आहूतो भरतो राज्ञी कथ कथमपि सुभद्रापतिश्चक्रवर्ती भवितेति दैवज्ञवचन-च्छलेना नुनीय सुभद्राम्परिगृहीतवान् ।

## रम्भामञ्जरी

रम्भामञ्जरी नयचन्द्रेण विरचिता । नयचन्द्रो हम्मीरकाव्य सन् १२८३-१३०१ ई० मध्ये रचितवान् । हम्मीरराज्याश्रित कर्पूरमञ्जर्या साम्येनेद रूपक सट्टकं भवितुमर्हति, किन्तु प्रणयकथाविन्यासविशेषेण सस्कृतभाषाप्रयोग-प्राचुर्येण च नाटिकात्वेनोपनिबद्ध प्रतीयते । सूत्रधारानुसारेण—

> षड्भाषा-सुकवित्व युक्तिकुशलो य शारदादेव्या
> दत्त प्रौढवरप्रसादवशतो राज्ञा यो रञ्जक ।
> य पूर्वेषा कवीना पथि पथिक एतस्य स कारको
> विख्यातो नयचन्द्रनामसुकविर्नि शेषविद्यानिधि ॥

प्रतापरुद्रकल्याणं संस्कृतनाट्येषु उभयथा वैशिष्ट्यं भजते। प्रथमतस्तावदिदमैतिहासिकमितिवृत्तं किंचित् परिवर्त्य यथादेशकालं यथास्थितं प्रस्तौति। अत्र प्रतापरुद्रस्य वंशपरम्परा वर्णिता। गणपतेः १२५८-५९ ईसवीये वर्षे शासनसाहाय्यमाचरन्ती प्रायेण १२६१ वर्षे गणपतौ दिवंगते १२८० ई० पर्यन्तं शासनसूत्रं सञ्चालयन्ती, तदनन्तरञ्च दौहित्रेण प्रतापरुद्रेण कृतसाहाय्या रुद्राम्बा वर्णिता। १२९६ ई० वर्षे प्रतापरुद्रस्याभिषेकश्च मुख्यो विषयः। अधिकृतशासन एव प्रतापरुद्रः शत्रून् विजेतुं नियुक्तः। अधिकृतपूर्वमपि रुद्राम्बा-राजत्वकाले [illegible]सन्धेर्वल्लूरीपट्टनसामन्तमम्बदेवप्रख्यातं काञ्च्यां रविवर्माणं पाण्ड्यनरेशं [illegible]। तस्य द्वादशभ्यः शिलालेखेभ्यो वृत्तमिदं समर्थितम्।

अपरञ्च नाटकमिदं नाट्यशास्त्रमनुरुध्यैव [illegible]। तथा हि अर्थोपक्षेपकाणामङ्केभ्यो बहिर्निवेशः प्रवेशकानामङ्कद्वयम[illegible] निपातं कृतोऽन्येषु अर्वाचीनेषु ज्योतिःप्रभाकल्याणप्रभृतिष्वनुगच्छति। हरि[illegible]मल्लस्य मैथिलीकल्याणमपि तामेव परम्परामनुसरति।

अत्र नाट्यशास्त्रीयाणि लक्ष्यपदानि प्रतिपदं सोदाहरणानि स्पष्टीकृतानि।

संस्कृतभाषया प्रणीतेषु विरलं विरलं-चरितात्मकेषु रूपकेषु नाटकमिदं शोभते। योरपीयभाषाभिः Biographical नाटकानां परम्परा वर्तत एव।[1]

## कादम्बरीकल्याणम्

सौगन्धिकाहरणस्य कवेर्भ्राता, दशविधरूपकप्रणयनदक्षेण नरसिंहेन विरचिते कादम्बरीकल्याणे नाम नाटके बाणभट्टकृता कादम्बरीकथा अष्टाभिरङ्कैः रूपकायिता।[2] नाटकमिदं सर्वथा प्रकृतिवर्णनादिकं बाणकृतमेवानुहरति। पञ्चमेऽङ्केऽन्तर्नाटिकामुपनिबध्य कादम्बरीचन्द्रापीडयोः सङ्गतं वर्णितम्। करुणरसपरिपाको यथाप्रसङ्गं प्रभावेनातिशेते।

नरसिंहः काकतीयचरितमिति महाकाव्यमरचयत्। मलयवतीति गद्यकाव्यमपि तेन रचिता। तस्य भ्राता सौगन्धिकाहरणव्यायोगस्य रचयिता वारंगलानां काकतीयस्य राज्ञः प्रतापरुद्रस्य सभाकविर्बभूव। उभावपि प्राय

---

१ अस्योदाहरणम् Brutus by Howard Payne वर्तते।

२ कादम्बरीकल्याणस्य प्रकाशनं मद्रासनगरतः १९३६ ख्रीष्टाब्दे वी० कृष्णमाचार्येण सम्पादितमभवत्।

१३०० ख्रीष्टाब्दमभितः काव्यप्रतिभाविलासं पुरस्कृतवन्तौ । वेमभूपालेन साहित्यचिन्तामणौ कादम्बरीकल्याणस्य पद्यानि उदाहृतानीत्यनेन नाटकस्य प्रतिष्ठा व्यज्यते ।

## सौगन्धिकाहरणव्यायोगः

सौगन्धिकाहरणस्य व्यायोगस्य प्रणेता विश्वनाथः प्रतापरुद्रकल्याणस्य कवेः विद्यानाथस्य भागिनेयो बभूव। साहित्यदर्पणस्य लेखकाद् विश्वनाथ-महापात्रादयं कविः प्रायः शतवर्षैः प्राचीनतरः। तथा हि प्रस्तावयति सूत्रधारः।

"राज्ञः प्रतापरुद्रेण संभावितैः... ..सभासद्भिः सबहुमानमादिष्टोऽस्मि ।......

विश्वनाथ इति ख्यातः कविरस्ति यदुक्तयः ।
आकाञ्चनमरत्नं च विदुषां कर्णभूषणम् ॥३

इत्यसौ चतुर्दश्याः शताब्द्या आरम्भ एव क्वचित् स्थितिं लेभे। अयं हि कवेर्गङ्गादेव्या गुरुरासीदिति तयैव प्रशंसितः—

चिरं स विजयी भूयाद् विश्वनाथः कवीश्वरः ।
अस्य प्रसादात् सार्वरयं समिन्धे मादृशीष्वपि ॥

मधुराविजय १.१६

इति प्रतापरुद्रस्य समयस्तत्कल्याणनाटकप्रसङ्गे निर्णीतः तेनैव सुधियोऽवधारयन्तु ।

पाण्डुतनयेषु वने वसत्सु कदाचिद् वातानीतं सौगन्धिकपुष्पं दृष्ट्वा द्रौपदी तादृशमेवान्यल्लब्धुकामासीत् । भीमस्तदभिलापं विदन्नेव तत्पुष्पगन्धवाहमभिसरन् गन्धमादनं गतवान्। तत्र हनुमान् पूर्वोपस्थितो लाङ्गूलेनास्य मार्गं बाधतेस्म। भीमस्तेन कंचित् कालं विवदति स्म। हनुमान् भीमाग्रजं हनुमन्तमेवानिन्दत्। भीमश्चाजानन्नेव तं प्राशंसत् । अन्ततो भीमस्तमभिज्ञाय तत्रागमनकारणं जगौ। तेन निर्दिष्टो यक्षान् विनेतुं लब्धविद्यश्चासौ सरोवरं प्राप्य यक्षैरयुध्यत। भीममागतं विज्ञाय कुवेरस्तं प्रत्युद्गतः तावदेव युधिष्ठिरादयोऽपि भीममन्विष्यन्तस्तत्रागताः कुवेरेण सम्मानिताः । सौगन्धिकं द्रौपद्यै भीमोऽदात्। तदा देवाः पुष्पाणि वर्षन्ति स्म।

अत्राल्पीयांसः कार्यव्यापारा भूयांसश्च संवादाः सौगन्धिकाहरणस्य रङ्गमञ्चीयं विफलप्रायत्वं सूचयन्ति। भीमहनुमतोः संवादो हास्यस्फोटकरो यत्र हनुमानात्मानमेव निन्दति, भीमश्च तमज्ञात्वा तमेव प्रशंसति ।

———

## प्रद्युम्नाभ्युदयम्

प्रद्युम्नाभ्युदयनाटकस्य पञ्चाङ्कस्य कर्ता रविवर्मा कुलशेखर कोलम्ब-राजस्य महाराजजयसिंहस्य यादववंश्यस्य पुत्र १२६६ ख्रीष्टाब्दे जात । समुन्नतो योद्धा विजेता चेति संग्रामधीरोपाख्य , परस्तात् पाण्ड्याश्चोलांश्चाधि-कृत्य सम्राट्पदमाधष्ठितवान् । दक्षिणभोज इति उपाधिना भूषित काञ्चीदेवा-लयोत्कीर्णलेखानुसारेण धर्मतरुमूलकन्द सद्गुणालंकाररवतु षष्टिकलावल्लभ इत्यादिरूपेण प्रसिद्धोऽभवत् । स पद्मनाभस्य यादवकुलेष्टदेवस्योपासकोऽभवत् । समुद्रबन्धेन कविभूषणेन च कविभ्यामाश्रित , स्वय कवि सगीतादिकोविदश्च शोभते स्म । इद च नाटक चतुर्दश्या शताब्द्या प्रथमे पादे पद्मनाभयात्रा-वसरेऽभ्यनीतम् । हरिवंशपुराणात् कथामादाय नाट्यौचित्येन परिवर्त्य शृङ्गार-वीर-रस प्रधानेऽत्र नाटके रविवर्मा अभिज्ञानशाकुन्तलमनेकत्रोपजीवति । हरिवंशगतमन्तर्नाटकं रम्भाभिसार यथावत् प्रयोज्य हंसपक्षिण स्थाने हंसाख्य चारणं नियोज्य सर्वात्मना पर्वतिषु नाट्यकर्तृषु काव्यकौशलेन रङ्गव्यापार-शिल्पेन च गौरवमादधाति ।

कथानुसारेण दुष्प्रवेश वज्रपुरमधिवसन्नसुरो वज्रनाभस्त्रैलोक्य पीडयन्निन्द्रमप्याकारयत्—"देहि मे जगदैश्वर्यं नो चेद् युध्यस्व वासव" इति । देवाना दानवाना च पितामह कश्यपो यज्ञ वितन्वान आस्त इति कलहो नोत्पातं दधाति । नारदेन समीरित कृष्ण प्रत्यब्रवीत्—

> प्रद्युम्न एव भगवन्नचिरेण वत्सो
> बाणैर्निहत्य तमिम युधि वज्रनाभम् ।
> नेत्राम्बुभिस्तदवरोध - नितम्बिनीना
> निर्वापयिष्यति जगत्त्रितयस्य तापम् ॥ १ १ ॥

इत्याकर्ण्य नारद कृष्णमुत्सुकयामास—प्रद्युम्नस्तर्हि वज्रनाभकन्या प्रभावती स्वयंवरे पितृविरोधे सत्यपि ग्रहीष्यति ।

अथ कृष्णो भद्रं नाम नटमाहूय प्रोवाच-भद्र, वज्रपुरं हि नानादिष्ट प्रविशेदिति त्वा नियुनज्मि कृताधिकृतप्रवेश प्रद्युम्नं गद साम्ब च प्रवेशय, येन ते वज्रनाभ हन्युरिति । तथादिष्टो भद्रो हंसेन नाम चारणेनात्मान वज्रपुराधी-शस्य पुरतो गीतकीर्तिं कारयित्वा लब्धप्रवेश प्रभावत्या सगीताचार्यपदे नियुक्त । तत्र एकदावसर प्राप्य प्रद्युम्नस्य रम्या प्रतिकृतिं चित्रफलके निर्माय

कलहंसिकया प्रभावतीमदर्शयत् । गोचरीकृतसौन्दर्यातिरेका हृतहृदया प्रभावती बभूव । कृष्णतनयं प्रद्युम्नं प्रत्यक्षमिव दृष्ट्वा स्वनगरे कृतप्रवेशमपि तथा तमाजानती प्रणयपराधीना सोत्कण्ठा सासीत्। भद्रनटेनाश्वासिता स्वविद्यामहिम्ना तमिहानयामीति कथं कथमपि नायिका प्राणानधारयत् ।

अथ प्राप्ते वसन्तोत्सवे वज्रणाभेनादिष्टो भद्रनटो रम्भाभिसरणं नाम प्रेक्षणकमभिनयति स्म । तच्च सकुटुम्बः सपरिवारो वज्रनाभोऽदर्शत् । तत्रैव प्रद्युम्नः प्रभावतीं भद्रेण संकेतितां वीक्ष्य साक्षात् कामतप्तो रम्भोत्कण्ठितस्य नलकूवरस्य भूमिकामभिनयति स्म । प्रेक्षणकनायकयोर भिसारेण संगमं प्रेक्ष्य प्रभावत्यपि अभिसारमभिनिवेशितवती । ततः कमलिनी-तीर-लतामण्डपे तौ मेलयित्वा भद्रस्तयोर्गान्धर्वविवाहमकरोत् ।

वज्रनाभः प्रद्युम्नस्य दूषणं श्रुत्वा तं हन्तुमयुध्यत । युद्धे सुदर्शनचक्रेण वज्रनाभो प्रद्युम्नेन हतः । कृष्णात्मजं देवाः पुष्पवर्षेण सभाजयांचक्रुः ।

## धूर्तसमागमः

धूर्तसमागमस्यैकाङ्कस्य रूपकस्य प्रहसनभूयं श्रितस्य रचयिता धनेश्वरस्य पुत्रो रामेश्वरस्य पौत्रो मिथिलायाः कर्णाट-राजं हरसिंहं चतुर्दश्याः शताब्द्याः प्रथमे पादे शासतं समाश्रितो बभूव । कामशास्त्रीयः पञ्चसायकनामा ग्रन्थो मुदितप्रहसनं च द्व्यङ्कं रूपकं ज्योतिरीश्वरेण कृतमिति आहुः ।

धूर्तसमागमस्य नायको विश्वनगरनामा दाम्भिको जङ्गमसाधुर्बभूव । दुराचारोऽस्य शिष्योऽनङ्गसेनां वेश्यां निभाल्यानङ्गवशं गतो विश्वनगराय निवेदयां बभूव । उभयोः सा कस्य भवेदिति निर्णेतुमनङ्गसेनयैवानुमतोऽसज्जातिमिश्रो नियुक्तस्तां स्वेन सहोषितुं निर्दिश्याभियोगग्रन्थिं समाधातुं कालातिक्रमं चकाङ्क्ष । तावत्येव काले मिश्रमहाभागस्य विदूषकोऽनङ्गसेनां चकमे । अत्रान्तरे मूलनाशको नाम नापित ऋणशोधनायाधमर्णां तां वेश्यामभ्यागतोऽनङ्गसेनयोक्तः—अहं तावन्मिश्रस्य संवृत्तेति यदहं तुभ्यं धारयामि तत् तस्मादेवोद्ग्राह्यमिति । शिष्याद्दणर्णमादाय तद्दणमोकं विधाय मिश्रो नापितं समादिदेश—मां परिचरेति । तेन च पाशैर्बद्धमेनं विदूषको मोचयामास ।

## संकल्पसूर्योदयम्

संकल्पसूर्योदयस्य नाम दशाङ्कस्य महानाटकस्य प्रणेता वेङ्कटनाथो वेदान्तदेशिकस्त्रयोदश - चतुर्दश-शताब्द्योः शतादधिकान् ग्रन्थान् रचितवान् । वेङ्कटेशतीर्थोत्सवाहनि लब्ध-जन्मा रामानुजाचार्यस्य भागिनेयः षड्वर्षदेशी-

योऽसौ रामानुजगुरोर्वरदाचार्यस्य विद्यालयं श्रीभाष्यगोष्ठीं श्रोतुं गत । तत्र विस्मृत कमपि प्रस्ताव स्मारयन् वरदाचार्येण दत्ताशी ख्यातोऽभवत्—

प्रतिष्ठापितवेदान्त प्रतिक्षिप्तबहिर्मत ।
भूयास्त्वं विद्यमा यत्व भूरिकल्याणभाजनम् ॥

अहीन्द्रनगरे लब्धहयवदनप्रसादोऽयं सर्वतन्त्र-स्वतन्त्रविरोधिमतानि निराकर्तुं भारतभुव पर्यटत्। तदेव ग्रन्थानपि विरचितवान्। पुनरागाम श्रीरङ्गम्। तत्र वादैर्विरुद्धमतावलम्बिनो विजित्य वेदान्ताचार्यपदवीमलभत। तत्रत्यशास्त्रार्थसचया शतदूषणीग्रन्थे सगृहीता विद्यन्ते। परमतभङ्गनाम्ना स्वग्रन्थेनाधिगतयशास्त्वाहीन्द्रनगराधीशेन कवितार्किकसिंहोपाधिनालकृत ।

स डिण्डिमसार्वभौम पराजित्य त शिष्यता नीतवान्। पश्चात् विष्णुघण्टावतारोपाधिना तस्य महिमावर्धत। स रामानुजसिद्धान्तान् प्रचारयन् १३२८ खीष्टाब्दे पुन श्रीरङ्गमध्यवसत्। तत्र च १३३६ खीष्टाब्दे मलिककाफूरेण श्रीरङ्गमन्दिर लुण्ठनमिति मन्दिराधीक्षकेण सुदर्शनसूरिणाम्ने श्रीभाष्यव्याख्या श्रुतप्रकाशिका च ग्रन्थौ समर्पितौ। तौ रक्षन्नेष स यादवाचलमध्युवास। वेङ्कटोऽसौ वेदान्तदेशिक १३६९ खीष्टाब्दे दिवङ्गत ।

दशाङ्केन सकलसूर्योदयमहानाटकेन प्रबोधचन्द्रोदयमनुसृत्य वेङ्कटो विशिष्टाद्वैत प्रतिपादयितु ब्रह्मसूत्राध्यायान् रचितवान्। तद्यथा प्रथमेनाङ्केन समन्वयाध्याय, द्वितीयेन विरोधाध्याय तत सप्तभिरङ्कैर्वैराग्यादिपरक चतुर्थाध्याय निबध्नाति स्म। बीजनिर्देशो यथा—

दुर्जय प्रतिपक्ष च दूरदर्शिरय जन ।
विवेकश्च महामोह विजेतु प्रभविष्यत । १२६

यथा च कथानकसक्षेप —

मृगतृष्णिकामयोनिद्रितेन महता मोहेन दुर्मेधसा
कर्मेन प्रभुरुद्धतेन इव न कारागृहे स्थापित ।
विख्यातेन विवेकभूमिपतिना विश्वोपकारार्थिना
कृष्णेनेव बलोत्तरेण धृतिनामुक्तस्त्वय प्राप्स्यसि ॥ १२६

षष्टेरधिकानि प्रतीकपात्राणि विवेकादीनि प्रतीकैर्भिर्विवेदिभिरैक्ये भजन्ते । गुरुशिष्यादयोऽपि मध्येवृत्तमुपनिबद्धा । प्रबोधचन्द्रोदयमेवानुहरतीद नाटकं, यत्र विवेक ससैन्यो महामोह ससैन्यं जयति। वैष्णव प्रस्थानस्थापका आचार्या अप्यत्र पात्रता भजन्ते । मध्ये मध्ये शास्त्रार्थविवादा

गुम्फितः। महामोहेनैव बौद्धजैनादिमतानि प्रवर्तितानीति वेदान्तदेशिकस्याग्रहः। विवेकस्तस्य समस्तां व्यूहरचनां भङ्क्त्वा जयमुपलभ्य मोक्षमार्गं प्रशस्तं करोति।

वेदान्तदेशिकः शिल्पीव नवनवकल्पनाविकल्पकुशलः काव्यप्रतिभां प्रतिभोन्मेषविशेषेण प्रकाशयति। अनुप्रासच्छटाविकटापि रचना प्रसादं नैव जहाति। यथा—

मुधारम्भे दम्भे मयि च मदने मुक्तकदने
मितोत्साहे मोहे वृजिनगहने व्याप्तदहने ॥ ४.२५

आत्मीयां भणितिं सुन्दरीं च स्तौति कविः —

निर्धूताखिलदोषा निरवधि-पुरुषार्थ-लम्भनप्रवणा।
सत्कविभणितिरिव त्वं सगुणालंकार-भाव-रस-जुष्टा ॥ १.६४

इतीह काव्यपरिभाषेव शोभते। रूपकरूपणमपि यथा—

पदः पद्माकान्तः प्रणिपतनमस्मिन् हिततमं
शुभस्तत्संकल्पश्चुलुकयति संसारजलधिम्।
झटित्येव प्रज्ञामुपजनयता केनचिदसा—
वविद्यावेतालीमतिपतति मंत्रेण पुरुष ॥ १.८३

इत्यहो संगीतकं, विस्मयकरी निसर्गच्छटा, वर्णनाकौशलं च। तत्र मेघमालाया मनोहारि वर्णनम्—

अक्ष्णोरञ्जनवर्तिका यवनिका विद्युन्नटीनामियं
स्वर्गङ्गायमुना - वियज्जलनिधेर्वेला—तमालाटवी।
वर्षाणां कवरी पुरन्दरदिशोऽलंकारकस्तूरिका
कन्दर्प-द्विप-दर्प-दान-लहरी-कादम्बिनी जृम्भते ॥ २.८०

यथा वा कावेर्या वर्णनम्—

खेलच्चोलवधू - विधूत-कवरी-शैवालितामन्वहं
पश्येम प्लवमान-हंसमिथुन-स्मेरां कवेरात्मजाम् ॥

आस्तां तावद् वेदान्तदेशिकस्य वेदान्ताग्रही निर्वेदकलितो रामानुजाचार्यदर्शनादर्शः प्रतिभाप्रकर्षः, शब्दार्थयोगनैपुणी पुण्या च रससम्भृतिः कामपि प्रत्यग्रतामग्रे सारयति। पद्यप्राया संवादा उपदेश-प्रधानानि पद्यानि वेदान्तदेशिकाश्चोपदेशास्तनूकुर्वन्ति रङ्गमञ्चव्यापारान्। एतानि काव्यसारस्य स्वारस्यमात्रं तन्वन्ति।

## उन्मत्तराघवम्

भास्करकवेरुन्मत्तराघवं प्रेक्षणकमेकाङ्कं प्रथमतो विद्यारण्यमहोत्सवेऽभिनीतम्। अयं विद्यारण्यो माधव एव चेत् सायणस्य भ्राता, तदोन्मत्तराघवस्य रचनाकालश्चतुर्दशी शताब्दी भवेत्।

अत्रोन्मत्तराघवे सीतया कियत्काल वियुक्तस्य रामस्योन्मत्तालापास्त्यैवोपनिबद्धा यथोर्वश्या वियोगेन पुरूरवसो विक्रमोर्वशीये। रामलक्ष्मणयोर्मृगया विहर्तुं गतयो पुष्पाण्यवचिन्वती सीतान्तर्धत्ते। मधुरिकायास्तथा विज्ञाय रामो विलपति। दुर्वाससः शापेन हरिणीत्वं गता सीतागस्त्येन निरस्तशापा पुना राम मिलति।

भास्करस्य सानुप्रासा सरणि काव्यपान्थान् सविश्रम गमयन्ती पादन्यासकोमला जातु मनोहरति। यथा

माकन्दासि मलयपवना मन्दमान्दोलयन्त
मञ्जरयस्या मधुकरयुवा मञ्जरीणा मरन्दे ॥४

## भीमविक्रमव्यायोग

मोक्षादित्यो भीमविक्रम व्यायोग १३२८ ई० वर्षेऽरचयत्। तस्य पिता भीमो गुरुश्च हरिहरोऽभवताम्। मन्ये शङ्खपराभवस्य कविरेवास्य गुरुर्भवेत्। मोक्षादित्यो महाभारतमुपजीव्य कथानकमत्र गृह्णाति। जरासन्धेन भीमस्य युद्धमधिकृत्य कथा प्रसरति।

कथानुसारेण जरासन्धस्य वधाय कृष्णोऽर्जुनो भीमश्च तस्य राजधानी गिरिव्रज गच्छन्ति। तत्र ब्राह्मण परित्यज्य नान्य प्रविशतु इति राजाज्ञानुसारेण भीमसेन आचार्यश्चन्द्रशेखर इति कृष्णश्चक्रधरस्नातक इति अर्जुनश्च धवलस्नातक इति ब्राह्मणवेषगूहितात्मानस्ते प्राविशन्। अरुणोदयात् प्राक् कृष्णार्जुनयो सिद्धेश्वर देवमाराधयितु गतयोर्भीम एकल स्थित कस्यापि राजकुमारस्यार्तवाणीमश्रृणोत्—अहमेवात्मनोऽन्त करिष्ये—

चिरमकारि मया मुनिवत तप
श्रुतिजपश्च समाधिमभुञ्जता।
हुतमन तहविस्तव तुष्टये
न हि महेश मनागपि तत्फलम ॥२२

तावदेवास्य माता वधूश्चागच्छताम्। को म्रियेतेति तेषु विवाद शृण्वन्

भीमस्तत्र शिवोऽहं विप्ररूपो वो रक्षार्थं तुष्टः सन्नायातोऽस्मि। यूयमितो व्रजतेति। इदमत्राकूतम्—जरासन्धेन शिवाय होतुं गृहीतौ पितरं भ्रातरं च मोचयितुं स राजकुमारः शिवतपश्चरन्नपि किमपि फलमनवाप्य प्राणाहुतिं करिष्यन्नासीत्। भीमेन ते त्रयोऽपि ततो निःसारिताः। तावदेव कृष्णार्जुनौ तत्रागतौ।

भीमाहूतेन घटोत्कचेन नगरपालिकायां जरायां दूरीकृतायां, दुर्गभङ्गाय चैत्यकगिरिशिखरे च निपातिते ते राजाजिरं गताः।

अथ परिचयं पृष्टास्ते यथावदेवात्मानं विज्ञापितवन्तः। तदा पुत्रं सहदेवं राज्येऽभिषिच्य राजा युद्धाय सज्जोऽभवत्।

जरासन्धः कृष्णमवदत्—

त्वं पुरैव विजितोऽसि वाक्पटुः
फाल्गुनोऽपि किल फल्गुयुद्धकृत्।
संयुगेषु भुजवीर्यशालिनं
भीमसेनमहमुद्यतं वृणे ॥६४

ततो मागधराजं तं पराजित्य भीमसेनस्तद्दुहितु-पाणिग्रहणं कृतवान्। तदा वन्दीभूता राजानः सर्वे मोचिताः।

## कुवलयावली

कुवलयावल्या नाटिकाया रचयिता सिंहभूपालो रसार्णवसुधाकरस्य प्रणेता चतुर्दश्याः शताब्द्याः पूर्वार्धेऽभवत्। इयं नाटिका रत्नपञ्चालिकेत्यपि पुष्पिकायां संज्ञिता।

पूर्णेयं सिंहभूपेन कवितामधुजल्पितैः।
रत्नपञ्चालिका नाम नाटिका रसपेटिका ॥

यथा भासस्य प्रतिमानाटकं, यथा वा सुभटस्य छायानाटकं तथेयं नाटिका रत्नपञ्चालिकेति संज्ञिता। कथानकेन प्रतिमायाश्छायाया वा योजना स्पष्टतरं प्रतीयते। अस्यां कुवलयावल्यां कृष्णस्य विवाहमालक्ष्य कल्पितैव कथोपनिबद्धा।

भूमिरात्मानं कुवलयावलीं नाम कन्यारूपिणीं कृत्वा रुक्मिण्या सहावसत्। नारदप्रदत्ताङ्गुलीयकेन सा स्त्रीभिः स्त्रीरूपेण पुरुषैश्च रत्नपुत्तलिकारूपेणादृश्यत। एकदा सा चन्द्रलेखया सहालपन्ती कृष्णेन साश्चर्यं वीक्षिता—

कथं नाम रत्नपञ्चालिकया सहालपति चन्द्रलेखेति । तस्या पतितमङ्गुलीयकं प्राप्य कृष्णस्तां स्वरूपतोऽपश्यत् । अयमेव प्रणयोपक्रमः । सत्यभामा रहस्य विज्ञाय तां प्रासादे बन्दीकृतवती । तावदेव कोऽपि दैत्यो जहार ताम् । कृष्णस्तां मोचयामास । नारदेन विदितवृत्तान्ता रुक्मिणी तां कृष्णाय समर्पयामास ।

कर्पूरमञ्जर्यामिवास्या नाटिकाया गीतसम्भारं प्रचुरं कलयामास कविः ।

## कमलिनीराजहंसम्

कमलिनीराजहंसस्य रचयिता पूर्णसरस्वती बहुशो रचनाभिः ख्यातिं गतश्चतुर्दश्यां शताब्द्यां प्रादुर्बभूव । अस्य नाटकस्य प्रथमोऽभिनयो राजपरिवारेण दृष्टो वृषपुर्यां (त्रिचूडे कोचीनस्थे) शिवालयेऽभूत् । इदं वस्तुतो गीतिनाट्यत्वमेव भजते । नाट्यापेक्षया गीतितत्त्वस्य प्राधान्यमत्र विलसति ।

अत्र कथानुसारेण कन्या कमलिनी नायिकास्ति राजहंसश्च नायकः । कुमुदिनी कलहंसश्च तयोः सखायौ वर्तेते । एकदा कुमुदिनीमालपन्तीं कलहंसोऽशृणोत् । कमलिनी राजहंसस्य प्रथमदर्शनात् प्रभृति मदन-सन्तप्ता प्रतिभाति । सा कलहंसं परस्तात् तद् व्यतिकरं न्यवेदयत् । अत्रान्तरे विन्ध्यगिरेर्नागराजो दूत्या सन्दिशति स्म मह्यं कन्यकां दीयतामिति । तरङ्गावली सा दूती तत्तो विद्रावयतिस्म । इदं वृत्तं कलहंसाच्छ्रुत्वा राजहंसो गोदावरीनद-लतामण्डपे मिलित्वा कमलिनीं पाणौ चकार । आक्रमणोद्यतं नागराजं पम्पा मकरीभिः कृतेन प्रत्याक्रमेण विद्रावयति स्म ।

ब्रह्मणाहूतो राजहंसो मानसे (सरोवरे) राज्यं कर्तुमारेभे । कमलिनीमाश्वासयितुं ततः कलहंसं प्रैषयत् । स चावृत्य कमलिन्या विरहदुर्दशां निवेदयामास । उभौ तां रक्षितुं गतौ । इह तावत् पम्पाया ब्रह्मलोकं गताया राजहंसप्रतिपालके च शरत्काले मानसमधिवसति कालमेघः सन्नद्धएव मयूरं राजानमभिषेक्तुं सोपद्रवं प्रायतत । कालमेघो वदति—

शरणं किरणा भवन्तु भानोः शरदा साकमघोषितु खगानाम् ।
ननु जीवति वाहिनी घनानां मदराजोदय-मण्य वैराणानाम् ॥

मयूराभिषेकसम्भारो यथा—

धारानीपैः सुरभिरभितः सङ्गता पुष्पलक्ष्मी—
र्दर्धं रम्भः पृथुतरघटैराभृतं सागरेभ्यः ।
शब्दं पुण्यो विसरति दिशश्चातकानां द्विजानां
पायोधोतं दर्शति च पुरो भूभृतः शृङ्गपीठम् ॥ ४१८

मयूराभिषेकोद्यते शत्रौ कालमेघे चक्रवाक-हंस-शुक-कलकण्ठादयो राजहंससेनायकाः ससैन्यं योद्धुमुपस्थिताः। कलहंसो राजहंस-सेनां वर्णयति—

बक-शुक - रङ्कु-भृङ्ग-पिक-कौशिक-संकलितां
चल-कलविङ्क कङ्क-जलरङ्कु-कुलिङ्ग-कुलाम्।
चटुल-पतत्र-पत्रचय-चित्रित-दिग्वदनां
कलयितुमीहते क इव ते महतीं पृतनाम्॥

ब्रह्मणादिष्टः शरन्मुनिः कालमेघसेना विनाश्य कमलिनीममोचयत्। राजहंसः पुनरायातः पम्पया कृतसभाजनो निजया प्रियया सह सुखमुवास। नाडीजङ्घमुखेन नाटकरहस्यं एतदुपस्थाप्यते—

कालमेघ-महामोहे शावश्रुत्या निवारिते।
हृद्यां कमलिनीं विद्यां दिष्ट्या शिष्यो ममाप्तवान्॥

कमलिनीराजहंसमिदं प्रथमतयोपलब्धं नाटकं यत्र पशु-पक्षि-वनस्पति-प्रतीकानि मानवा अभिनयन्ति। पञ्चतन्त्रशैलीमनुगतमेतन्नाटकं मानवेतरद् वस्तुजातं मानवतां नयति, आध्यात्मिकं च भावप्रभावं भावयति। वर्षां तावदविद्यारूपां शरदं च विद्यारूपां चित्रयन् विद्याया विजयमातनोति कविः पूर्णसरस्वती। वेदान्तोपदेशायास्य रचना प्रसृता प्रतिभाति। व्याख्यानप्रायाः प्रलापा अभिनयव्यापार-परिपन्थिनोऽपि उपदेशप्रवणस्य संन्यासिनो लक्ष्यं पूरयन्त्येव। कतिपये प्रसङ्गाः कवेः लोकानुभवमहिमानं प्रकाशयन्ति। तथाहि —

रमयतु सुमनोगणः प्रकामं
पिशुन-शुनां वदनैरदूषितानि।
कविभिरुपहृतानि दीप्तजिह्वै—
रतिरसितानि हर्वीषि वाङ्मयानि॥

अत्र पिशुनाः श्वभिरुपमिताः कवेर्वीक्षानैपुणीं प्रकटयन्ति। स्वस्य वाणीं मङ्गल्यामाशासानोऽयं श्लाघते—

वाणी ममास्तु वरणीय-गुणोघ-वन्द्या
श्लाघ्यां तथापि विदुषां शिवमाश्रयन्ती।
दासी नृपस्य यदि दारपदे नियुक्ता
देवीति सापि बहुमानपदं जनानाम्॥

शृङ्गारपूरस्यन्दिनि नाटकेऽस्मिन् मनोहारीणि निसर्ग सुषमा वर्णनानि मनो हरन्ति । यथा,

वियति वितततिरेषा चक्रिणः चक्ररूपा
कलयति कलनादं कर्णयो पूर्णपात्रम् ।
दिनकर-कर सगे दिग्वधूना स्खलन्ती
विविध-मणि-निबद्धा मेखला-मालिकेव ॥ २ १६

यथा वा युद्धवर्णनम्—

उग्रं पक्षाप्रपातैस्तृणमिव वियति भ्रामयन् सामयोनिं
चण्डैस्तुण्डप्रहारैः सलिलमिव दृषा कुक्षमुत्क्षोभ्य चक्षु ।
पाद-कोटी-चपेटा-त्रुटित कट तट-स्फार नियन्मवोरस
सादस्याकीर्णपादं पविरिव मलय क्ष्मातले पातयामि ॥२ २९

अपि शृङ्गारवर्णना नैपुणी—

मिञ्चन्तो च्युत दृष्णानुबृहिता बाष्पाम्भसा दोलता—
मेकेना मतर सृजन गुरुणा सेम्पीडयन्ती, स्तनम् ।
पार्श्वेनैकतरेण हन्त शयिता पाणौ जिनी सम्तरे
चित्रस्थेव विमाय्यने मम सखी चित्त गते प्रेयसि ॥२ ३१

क्वचिन्निसर्गशोभा सालंकारा सरसा मधुरिवाधिशेते पदशय्याम्—

शतमखमणिभूमि संस्पृशन्ती करार्ग
स्फुरति कुरनिगूढा पद्मरागस्थलीयम् ।
जलविहरणकाले दुग्धसिन्धौ निलीने
मधुमथनमुपकण्ठे मार्गमाणेव लक्ष्मी ॥

पशुपक्षिणा सव्यवहारेण योरपीयदेशेषु प्राचीनकालतो नाटकानि प्रणीतानि । कामेडीनाट्यस्याविर्भावं विशदयता सोबेल महोदयेन प्रोक्तम्—

Comedy was an outgrowth of the comus or festive procession in honour of Dionysos in ,which performens disguised as birds and animals wound their way through the streets of the town to the temple [1]

'बर्ड्स' इत्याख्ये नाटके कविः पक्षिमुखेन सत्य ख्यापयति—

1 The Theatre Handbook p 244

Is there any one amongst you
O spectators who would lead
With the birds a life of pleasure ?
Let him come to us with speed

'वर्ड्स' नाटकस्य रचना ४१४ ख्रीष्टाब्दपूर्वं अरिष्टाफेन्स महोदयेन निष्पन्ना ।

जावादेशेऽपि पात्राणि पशु-पक्षिणां भूमिकायां तेषां वेषेणाभिनयन्ति ।[१]

कमलिनीराजहंसमपरं केरलीयं नाटकं सुबाला-वज्रतुण्डं सम्यक् स्मारयति ।

## सुबाला-वज्रतुण्डम्

सुबालावज्रतुडस्य अस्य प्रणेता श्रीरामोऽज्ञातकालकुलवृत्तोऽपि हास्यरसपरायणकविः शोभते । नायको वज्रतुण्डो मूषक एव । तस्य पाणिगृहीती भार्या सुबाला रक्ताङ्गदेन सर्पेण वलाद् हृता । वज्रतुण्डो मूषकाणां महतीं सेनां समाहृत्य रक्ताङ्गदमाक्रामति स्म, तं हत्वा स्वपत्नीं पुनर्लभते च ।[२]

## विटनिद्राभाणः

विटनिद्राभाणश्चतुर्दश्यां शताब्द्यां कोचीनराजाश्रये प्रणीतः । अत्र महोदयपुरस्य रामवर्मणस्तन्मातुर्लक्ष्म्याश्चोल्लेखं चर्चयताऽस्य प्रणेतुर्नाम न विद्यते । अत्रोपनिबद्धो विटो लावण्यमूर्तिं कामपि स्तौति—

तलोदरि तवापाङ्गैः क्रीतमेतज्जगत्त्रयम् ।
त्वां विना स तु कन्दर्पः कं दर्पमवलम्बते ॥

भरतवाक्येन राजा रामवर्मा कृताशीः स्तूयते स्म—

यावत् खण्डेन्दुमौलिं श्रयति गिरिसुता यावदास्ते मुरारे-
र्वक्षस्यक्षीण-हार-द्युति-मणि-शवले देवता मङ्गलानाम् ।
यावद् वक्त्रेषु मैत्रीमुपनयति गिरामीश्वरी पद्मयोने-
स्तावल्लक्ष्मीप्रसूतिः स्वयमवतु भुवं रामवर्मा नरेन्द्रः ॥

---

१. The Theatre the East p. 210 ley Faubion Bowers.

२. पुस्तकमिदं प्रकाशितं लेखकस्य सविधे वर्तते ।

## चन्द्रकला

चतुरङ्किकाया चन्द्रकलानाटिकाया कवि महापात्रविश्वनाथ कलिङ्गाधिपस्य सान्धिविग्रहिक साहित्यदर्पणकर्तेति सुविदित एव । अस्या नाटिकाया प्रस्तावनामनुरुध्यास्य पिता चतुर्दशभाषाज्ञो महापण्डितश्चन्द्रशेखर आसीत् । परमवैष्णवो विश्वनाथ पितु साहित्यशास्त्रमधीतवान् । राजकीयसेवाया स गजपति सान्धिविग्रहिकश्च बभूव ।

कविराजकविसूक्तिरत्नाकर-सङ्गीतविद्याविद्याधर-विद्यार्णवकर्णधारकला-विद्यामालतीमधुकर-प्रभृतिभिरुपाधिभि विश्वनाथ समलकृत । पाण्डित्यपरम्परानुबन्धेऽस्य कुले नारायणदास उल्लासदासश्चन्द्रशेखर इति प्रमुखा राज्ञा मता पण्डिता पूर्वतर बभूवु । अन्यामपि प्रभावतीपरिणयनाटिकामसौ चकार, राघवविलास महाकाव्यं कसवध चापि काव्यम् । साहित्यदर्पणे स्वग्रन्थानामुदाहरणानि नियोज्यासौ स्वप्रतिभज्योति स्तुवन् प्रतीयते । प्राकृतनिबद्धं कुवलयाश्वचरितं नाम काव्यमप्यस्य वैदुषी तनोति । प्रशस्तिरत्नावल्याममौ षोडशभाषाविचक्षणत्व प्रकाशयति ।

इय च नाटिका चतुर्दश्या शताब्द्याश्चतुर्थे पादे रचिता । अत्र चन्द्रकला-चित्ररथदेवयो प्रणयो विवाहश्च वर्णितौ ।

## भैरवानन्दम्

पञ्चाङ्कस्य भैरवानन्दस्यापूर्णप्राप्तस्य प्रणेता कविर्मणिको नेपालाधीश्वरस्य जयस्थिते (१३८५-१३९२ ई०) सरक्षणमाश्रितवान् । मणिको राजवर्धनस्य पुत्र नटेश्वरस्य शिष्यश्च बभूव । जयस्थिते पुत्रस्य जयधर्ममल्लदेवस्य परिणयावसर इद प्रथममभिनीतम् ।

अत्र भैरवानन्दो नाम तान्त्रिको नायको मदनवती नाम नायिका स्वीकर्तु यतते । गत्र क्रमादित्यस्य भार्या नायिका ऋषिशापेन मानवीभता । ता प्राप्तु बहुश कृतप्रयत्नोऽपि नायको विफल सन् दिवङ्गतो बभूव ।

---

## वामनभट्टस्य-रूपकचतुष्टयम्

पार्वती परिणय - शृङ्गारभूषण - कनकलेखा कल्याण - बाणासुरविजय-रूपकचतुष्टयस्य कवि चतुर्दश्या शताब्द्या परस्मिन् पञ्चदश्याश्च पूर्वस्मिन् भागेऽस्थात् । शृ गारभूषणस्य प्रस्तावनायामसावात्मानं स्तौति—

सौभाग्यस्य निधि श्रुतस्य वसतिर्विद्यावधूना वरो
लक्ष्म्या केलिगृह प्रसूतिभवन शीलस्य कीर्तें पदम् ।
नि सामान्य विकासया कवितया जागर्ति यस्सा‌ऽयं
श्रीमान् वामनभट्ट-बाणसुकवि साहित्यचूडामणि ॥५॥

कविना महाकाव्य द्वय नलाभ्युदयं रघुनाथचरित च विरचितम् ।

### पार्वतीपरिणयम्

पञ्चाङ्क मिद नाटक कालिदासकृतस्य कुमारसम्भवस्येव कथानकमुपजीवति ।

अभिनयोपयोगिनो निर्देशान् ददद् धन्यतामर्हति नाट्यकृत् ।

### शृगारभूषणभाण

भाणोऽय शृगारभूषणारव्यो वेशवाटवर्णनादिकमाकाशभाषितेन निरूपयन् कामपि प्रौढता वहति । वसन्तोत्सवे विलासशेखरो नाम विटो वारविलासिनीमनङ्गमञ्जरीमभिनन्दयति ।

### कनकलेखाकल्याणम्

वामनभट्टबाणस्य चतुरङ्किकाया नाटिकाया कनकलेखाया वीरवर्मणो दुहितु कनकलेखाया श्यामवर्मणा सह विवाहो वर्णित । उभौ विद्याधरौ ऋषिशापान्मानवलोकमवतीर्णावास्ताम् ।

### बाणासुर-विजयम्

नाटकेऽस्मिन् वामन आत्मान प्रशसति[1]—

पद्ये पटीयान् किल कालिदास
गद्ये पटीयान् किल बाणभट्ट ।

---

१ नाटकमिदम् अड्यार पुस्तकालये वर्तते ।

गद्ये च पद्ये च परं पटीयान्
वत्सान्वयो वामनभट्टवाण ॥

यथानाम नाटकेऽस्मिन् उषानिरुद्धप्रणयपूर्वकं कृष्णेन वाणासुरस्य विजयो वर्णितः ।

## ज्योतिःप्रभाकल्याणम्

ज्योतिःप्रभाकल्याणनाटकस्य प्रणेता ब्रह्मसूरिर्नाट्याचार्यस्य हस्तिमल्लस्य वंश्यः प्रतिष्ठातिलकस्य त्रिवर्णाचारस्य च ग्रन्थयोः रचयितासीत् । स चतुर्दश्याः शताब्द्याः पञ्चदश्याश्चापरपूर्वभागयोराविर्बभूव । शान्तिनाथः पूर्वभवे विद्याधरोऽमिततेजा ज्योतिःप्रभां विवहति इति कथावस्तु गुणभद्रकृतादुत्तरपुराणाद् गृहीतम् । शान्तिनाथजन्ममहोत्सवे तस्य प्रथमाभिनय आयोजितः ।

विवाहार्हं वयः प्राप्तायै पुत्र्यै ज्योतिःप्रभायै वरमुपयुक्तं चिन्तयमानं वासुदेवं प्रति वलदेवो विद्याधरममिततेजसं नाम प्रास्तौषीत् ।

तयोर्विवाहकथा नाटके वर्णिता । नेदं नाटकं सम्पूर्णं हस्तगतम् ।

नाटकेऽस्मिन् प्रवेशकविष्कम्भकौ प्रागङ्केभ्यो मुद्रितानि । प्रतापरुद्रकल्याणवदत्रापि नाट्यशास्त्रीय-लक्ष्यपदानामुदाहरणानि प्रस्तावितानि ।

## गोरक्षविजयम्

कीर्तनिककोटिकं प्रेक्षणकमिदं गोरक्षविजयं (कीर्तनविरहितं) विद्यापतिना शिवसिंह-राजेन (१४१२-१४१६ ई०) सभाजितेन रचितम् । संस्कृत-प्राकृतवद्धसंवादमयं मैथिलीभाषावद्धैः पञ्चविंशत्या गीतानां समवायेन नाटकमिदं शोभते । मैथिली-गीतप्राधान्येऽपि नेदं सजातीयं वा नाटकं मैथिली-रूपकमिति-संज्ञापयितुं शक्यते, यतो हि नाम प्राकृतांशवहुलमपि संस्कृतनाटकं प्राकृतं न भवति ।[१]

अत्र कथानुसारेण कदलीपुरे भूमिपतीभूतं भोगलिप्तं मत्स्येन्द्रनाथमन्विष्यन्तो योगिनो गोरक्षनाथः काननियरच राजसभाद्वारि प्रवेशं याचमानौ दौवारिकेण निषिद्धौ । आवां राज्ञः परिचितौ इति तेषां परिचयोक्तिं श्रुत्वा

१. भरतेन प्रमाणितम्—
अथवा छन्दतः कार्या देशभाषाप्रयोक्तृभिः ।
नानादेशसमुत्थं हि काव्यं भवति नाटके ॥ ना० शा० १७.४८

महामन्त्रिणा दत्ताभ्यनुज्ञौ तौ अन्त. प्रविश्य मत्स्येन्द्र रमणीभिरात्मान विनोद-यन्तमपश्यताम् । राजाज्ञया तौ लास्य च नृत्तं प्रदर्शयामासतु । नृत्तेनाद्भुतेन प्रीतोऽपि राजा 'एभिरेव राजकुमारो बौद्धनाथो हृत' इति पिशुनैर्निवेदित-स्ताभ्या प्राणदण्ड घोषयामास । तदनु नटाश्च राजकुमार पुनरुज्जीव्य राजान प्रसादयामासु ।

प्रसन्नो राजाद्भुतव्यवसायेषु तेषु गोरक्षनाथं प्रत्यभिजानात् । अथ मत्स्येन्द्रो योगपथत्यागेन कृता हानि परिगणय्यापि युवतीभि प्रसाधितसुकुमा-राङ्गरमणीयाभिरनुनीतो न सहसाशक्नोद् विलासान् मोक्तुम् । अन्ते च स्वपुत्रमपि योगिना सधर्माण दृष्ट्वा वयमपि राजपदमत्यजत् । एतदर्थं मत्स्येन्द्रो गोरक्षेण धिक्कृत —

"अद्यापि वनिताजनानुरागो न त्यजति" इति ।

## सोमवल्लियोगानन्दम्

सोमवल्लियोगानन्दमिति प्रहसनस्य प्रणेता अरुणगिरिनाथ प्रथम डिण्डिमद्वितीय इति पर्याय [१] विजयनगरस्य प्रौढरायस्य देवराय द्वितीयस्य वा (१४२२ १४४८ ई०) राजसभामलङ् कृतवान् । अत्र नायको योगानन्द परि-व्राजक सन्नपि सोमवल्लीति नाम कुलटामुद्वहा स्त्रिय प्रणयपाशेनाबद्ध समुत्सुकोदर्शित ।[२]

## नरकासुर-विजयम्

नरकासुर-विजयं व्यायोगवर्गीय रूपकं धर्मसूरेधर्मसुधी धर्मभट्टोभया-पराभिधस्य रचना । सन्यासाश्रमधिगम्यासौ रामानन्दसरस्वतीति गोविन्दा नन्दसरस्वतीति चाभिख्ये दधौ । अय हि पर्वतनाथस्य पुत्र कृष्णायास्तटे पेदपुल्लिनवंपत्तने जात । बहुकाल स वाराणसीमधिवसति स्म । साहित्य-धुरीण स वेदान्तादिपारगो बभूव । अस्य वंशया कुटुम्बिनश्चापि लब्धयशस आचार्या अभूवन् । धर्मसूरे रचनाकाल पञ्चदश्या शताब्द्या प्रथम पादो निश्चीयते । अन्येऽप्यस्य सप्तग्रन्था सन्तीति विविधविषयनैपुण्यमस्य प्रकटयन्ति । तथा हि

---

१ कवे विशेषण प्रस्तावनायामुल्लिखितमधोलिख वर्तते —
मल्लालरायकटकशविकुलगर्वसर्वंकषवि

२ प्रचण्डतरकाहलघण्टाडिण्डिमादि रचितघोषण । नाटकमिद हस्तलिखित Triennial Cat of Skt Mss in Oriental library, Madras, Vol I—VII भागे चर्चितम् ।

१—कंसवधरूपकम् ।

२—सूर्यशतकम् ।

३—कृष्णस्तुतिः ।

४—बालभागवतं ।

५—रत्नप्रभा शांकरभाष्यटीका ।

६—हंससन्देशः प्राकृतवद्धं दूतकाव्यम् ।

७—साहित्यरत्नाकरम् ।

नरकासुरविजयव्यायोगस्यास्य प्रथमोऽभिनयः शरदुत्सवे प्रातर्विद्वत्परिषदा आयोजितः । कविर्नास्य व्यायोगस्य भूमिकां विदधाति । यथा—

विख्यातेऽजनि पर्वतेश्वरसुधीः श्रीवारणस्यान्वये
षण्णां दर्शनकारिणां सुमनसामेकात्मलीलायितः ।
धर्माख्येन मनीषिणा विरचितस्तत्सूनुना तादृशो
व्यायोगो रसजृम्भितोऽस्ति नरकध्वंसाभिधो नूतनः ॥१३

अस्मिन् व्यायोगे प्राग्ज्योतिषपुरस्य राजा नरकासुरः कृष्णेन हन्यते, यतो हि नाम स देवानपि पीडयतिस्म ।

कवितालहरीप्रोह्यमानमतिर्नाट्यसंविधामतिवर्तते धर्मसूरिः । वर्णनावर्तेषु सामाजिकान् निमज्ज्य कृतकृत्यमन्योऽसौ कार्यव्यापारान् तृणाय मत्वा सानुप्राससंवादच्छटामुद्घाटयति ।

यथा—

टङ्कारैर्धनुषो हरेः श्रुतिपुटातङ्कावहैर्विद्विषां
भांकारैर्भुवनक्षयाम्बुद-रवाशङ्कावहैर्दुन्दुभेः ।
झंकारैः करिणां समग्रसमराहंकारिणां रक्षसां
हुंकारैरपि मांसलः कलकलः संकाशते साम्प्रतम् ॥४८॥

## विरूपाक्षस्य नाटकद्वयम्

उन्मत्तराघवं नाम प्रेक्षणकं रचयित्वा विजयनगराधिपतिर्विरूपाक्षो यशो लेभे । इदं तृतीयमुन्मत्तराघवम् । प्रथमं तावद् हेमचन्द्रस्य काव्यानुशासने निर्दिष्टमात्रं नाद्य लभ्यते । द्वितीयं भास्करस्य कृतिरत्र ग्रन्थे प्रागेव वर्णितम् । विरूपाक्षस्यापरं नारायणविलासं नाम नाटकं मद्रासस्थ हस्तलिखितग्रन्थागारे समास्ते ।

कवीनां विदुषां चाश्रयभूताः स्वयंमपि कवयो विद्वांसश्च विख्याता

विजयनगरस्य राजान । तेष्वन्यतमो विरूपाक्ष पचदशशताब्द्यामुदियाय । महाविजेता कुशलश्च शासकोऽसौ सिंहलान् विजित्य कर्णाट तुण्डीर-चोल-पाण्ड्यादीन् वशे कृत्वा तुण्डीरस्थ मरकतपुर राजधानीमधिवसति स्म ।

## उन्मत्तराघवम्

उन्मत्तराघवस्य प्रथमोऽभिनयोऽरुणाचले तिरुवण्णामलय-स्थाने शिव-रथोत्सवावसरे कृत आसीत् । वाल्मीकि-रामायणोपजीव्या कथास किञ्चित् परिवर्त्य योजिता सीताविरहोन्मत्त राम प्रलपन्त चित्रयति । रावणं लक्ष्मणेनैव हते राम सीतया पुन संगच्छत इत्यन्तमस्य कथानकम् । यथा स्वयमेव निर्दिशति विरूपाक्ष —

> वालिन्युन्मूलिते द्राक् प्रमुदितमनस सूर्यपुत्रस्य साह्याद्
> बद्धे सेतौ कपीन्द्रैलवणजलनिधि लक्ष्मणो लङ्कयित्वा ।
> हत्वा पौलस्त्यमाजौ सह रजनिचरै सेन्द्रजित्कुम्भकर्ण
> देवीमादाय भूयस्तव सविधमसावागत पुष्पकेण ॥८८॥

लक्ष्मणेनैव लङ्का जिता, रामस्तु समुद्र न ततार न वा रावण जघान ।

उन्मादप्रधानेन हि नायकेनात्र भवितव्य नामसार्थक्याय । कोऽयमुन्मादो नाम ?

> अप्रेक्षाकारितोन्माद सन्निपातग्रहादिभि ।

अथवा यथा सिंहभूपाल —

> अतस्मिंस्तदिति भ्रान्तिरुन्मादो विरहोद्भव ।

इत्येव प्रेक्षणकेऽत्र विरहतप्तो राम एवोन्मत्तो लक्ष्यते । शृङ्गारप्रधानेय रचनेति नात्र विचारमर्हति । हेमचन्द्र उन्माद लक्षयन् अकारण स्मितं, रुदितं, गीत, नृत्य, प्रधावितं, प्रलापादिक च समावेशयति । तदनुरूपैव रचनात्र दृश्यते । किन्तु सत्यप्युन्मादे रामो निसर्गं प्रति सचेतन एव लपति । नैव मुधा प्रलापास्तनोति । न वा मूढ इव विचेष्टते । हंसमिथुन दृष्ट्वा वदति—

> अन्योन्य दत्त - मृदु - लघु मृणाल-भङ्ग—
> मुत्पक्ष्मल - प्रसृत - पक्ष - कृताङ्कपालि ।
> कन्दर्प - केलि - कल - कूजित-कान्तमेत —
> दाभाति हंसमिथुन सविलासमग्रे ॥७२॥

तत्क्षणमेव जानकीतास्मरणोऽसौ निसर्गव्याप्ता प्रिया पश्यन् ब्रूते—

अम्भोजं वदनेन सौरभभृता, बिम्बाधरच्छायया
बन्धूकं, कुमुदं स्मितेन, शफरव्यावर्तनं चक्षुषा।
आलापैः शुकजल्पितं स्तनतटीहारेण तारावलिं
सा वेलास्वपि वापिकीषु युवयोर्निर्माय तुष्टिं व्यधात् ॥७४

हंसयूनोरेव तोषाय सीता सृष्टिमातनोन्न तु रामस्य। यथा च कालिदासो मेघदूते—

श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं
वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान्।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
हन्तैकस्थं क्वचिदपि न ते चण्डि सादृश्यमस्ति ॥(मेघ)

इति च्छायां गृह्णन्नपि कविर्नवामेव योजनां नवमेव प्रसङ्गं समाकलय्यावर्जयति मनः। अनेकत्र कालिदासं भवभूतिं चानुहरन्ती शैली कयापि वैदग्ध्यभङ्ग्या प्रौढिमानं भजते। निसर्गे सूक्ष्मेक्षिकापात एव साफल्यस्य हेतुः। यथा—

इयं हि नवमालिका तरुरयं नवरचम्पको
यथोचितमिमावुभौ दयितया कृतौ दम्पती।
मिथः सति समागमे मधुमिषाद् वधूः स्वेदिनी
पतिः पुलकजालकं वहति कोरकव्याजतः ॥

सीतायाः कामपि नवामेवाभिख्यां रामो गायति—

तस्या गण्डतले मया विलिखिता पत्रावली धातुना
वासन्ती पुलके सति स्मितवती सा वञ्चयन्ती सखीम्
सीता - निर्झर - मारुतानपदिशन्त्यभ्यर्ण-रत्नस्थले
संक्रान्तप्रतिमं निरीक्ष्य च मुखं स्विन्नं भृशं लज्जिता ॥६१

अत्र वासन्ती तावदुत्तररामचरितादेवेह नीता सीताया उत्तमनायिकात्वमधिकृत्य प्रत्यग्रतां दधाति। भवभूतेर्गजेन्द्रलीलां नवया छटया संयुनक्ति कविः —

करधृत - नलिनी- दलातपत्रो
मृदु-तरलीकृत-कर्ण-तालवृन्तः।
चलदलिवृन्द-चारु-गीत-चाटुः
प्रियकरिणीमनुवर्तते गजेन्द्रः ॥ ६२

ग्रीवाभङ्गाभिराममित्यादि कालिदासीय पद्यमनुहरन्नपि कवि स्वप्रतिभया नव्यतामदधाति। यथा

पुरस्तादाधावत्यतिजवमुदस्ताग्रचरणो
विवृत्तग्रीव सन्त्रसदृदयमालोकयति माम।
क्षणाद् दृश्य पार्श्वे निवसति करग्राह्य इव मे
क्षण भूयो दृष्टेरपि न विषय याति तुरिक्ष ॥१६

*प्रसङ्गान्तरमेवात्र जयति। शाकुन्तले हि मृगो दुष्यन्ताद् भय नाटयति।* अत्र तु तस्य नैसर्गिकी गतिश्छलयति राम स्वर्णमृगविग्रहेण। यथा वा तस्मिन्नेव मारीचप्रसङ्गे—

मरकतरुचा जघाकाण्डेन शाद्वलयन् महीं
कुवलयमयीराशा कुवलयापाङ्ग-विवर्तनै।
गगनमखिल गात्रोद्योतै सविद्युदिवावहन्
कनकहरिण सोऽय मेरो किशोर इवागत ॥१७

## नारायणविलासम्

पञ्चात्मके नारायणविलासमिति नाटके यथानाम नारायणलीला वर्णिता। नाटकेऽस्मिन् कविरयं कर्णाट चोल-पाण्डय प्रान्ताना शासक आसीदिति वर्णितम्। अथ च तेन सिंहलद्वीपे विजयश्री स्थापिता।[१]

## रामदेवव्यासस्यच्छाया नाट्यानि

रामदेवो व्यासस्त्रीणि रूपकाणि सुभद्रापरिणयनम्, रामाभ्युदयम्, पाण्डवाभ्युदयम् च प्रणीय स्वयमेव तानिच्छायानाट्यानि कथयति। एतानि छायानाट्यमिति दूताङ्गदप्रस्तावे विवेचितम्। असौ कविर्मध्यप्रदेशस्य रत्नपुराञ्चले (रायपुर) पञ्चदश्या शताब्द्या पूर्वार्द्धे स्थिति लेभे।

## सुभद्रापरिणयनम्

राजनि हरिवमणि कलचुरिवश्ये रत्नपुर शासति तदादेशानुसारेण रामदेवव्यास सुभद्रापरिणयनमरचयत्। अस्य कथानक महाभारताद्गृहीत सुपरिष्कृतञ्च।

१. M Krishnamachariar Hist of Classical Sanskrit lit P. 217

## पाण्डवाभ्युदयम्

अङ्कद्वयात्मकं पाण्डवाभ्युदयं नामरूपकं रामदेवव्यासेन हरिवर्मपौत्रं रणमल्लदेवमाश्रयता रचितम् । द्रौपद्या आजन्मन आ च स्वयंवरादव कथोपनिवद्धा ।

## रामाभ्युदयम्

रामदेवस्य मेरुमहाराजाश्रयं गतस्य रामाभ्युदयं रूपकं लङ्काविजयमारभ्य रामस्यायोध्यां प्रत्यागमनान्तां कथां निवघ्नाति । इदमप्यङ्कद्वयात्मकमेव ।

## चन्द्रिका-कलापीडम्

चन्द्रिकाकलापीडस्य लेखको रामवर्मा केरलदेशे कोलराज्यस्याधिपतिरासीत् । तस्य रचनाकाल १४९३ खीष्टाब्दतः १४४३ खीष्टाब्दपर्यन्तो बभूव । १४४३ खीष्टाब्दे स दिवङ्गतः । तस्य मामकः केरलवर्मा कोलत्तुनाडस्य राजा बभूव १४२३ खीष्टाब्दे । तेन मामकेनादिष्टो रामवर्मा भारतसंग्रहं महाकाव्यं विरचितवान् ।[1]

चन्द्रिकाकलापीडस्य प्रस्तावनानुसारेण महाराजस्य रविवर्मणः कनीयसो मूर्तस्येव कोलभूभागधेयस्य केरलवर्मणः सहोदरीसंजातेन रामवर्माभिधेयेन विरचितं शृङ्गाररसभूयिष्ठं चन्द्रिकाकलापीडं नाम नाटकम् ।

पंचाङ्कस्य नाटकस्य चन्द्रिकाकलापीडस्य नायकः काशीवासी राजा कन्दर्पशेखरो नायिका च कलिङ्गराजकुमारी चन्द्रिका स्तः । अस्य प्रथमाभिनयः पेरिन चेल्लूरपुरस्य नीलकण्ठायतने चैत्रमहोत्सवे आयोजितः । मालविकाग्निमित्रमुपजीव्य नाटकमिदं प्ररूपितं प्रतिभाति । सरलसरला संस्कृतभाषात्र विलसति । यथा भरतवाक्यम् ।

देवि प्रसन्नहृदया सततं मयि स्याः
स्वाचारमग्नमनसस्सकलाः प्रजाः स्युः ।
ब्रह्मावलोकरसिका मुनयो भवन्तु
राज्ये वसेत् स्थिरतरानुपमा च लक्ष्मीः ॥

## गंगदासप्रतापविलासम्

गङ्गदास-प्रतापविलासस्य नामैतिहासिकस्य नवाङ्कस्य नाटकस्य रचयिता गङ्गाधरो मूलतः कर्णाटकवास्तव्यो विजयनगरनृपतेः प्रतापदेव-

---

१. महाकाव्यमिदं केरलानां ग्रामकीय संस्कृत ह० लि० पुस्तकालये ४४८३ संख्यकं विद्यते ।

राज्यस्य सभातो गुर्जरानागम्य कञ्चित् काल मुहम्मदद्वितीयस्य राजसभामलञ्चकार। पश्चाच्च जूनागढराजेन गङ्गदासेन सभाजित । सभाऽयते यदमावेव मण्डलीक नाम महाकाव्यमरचयद् यत्र जूनागढस्यान्तिमो हिन्दूनरेशो वर्णित ।

अस्मिन्नाटके अहमदाबादसुलतानेन मुहम्मदद्वितीयेन सह चम्पानगरराज्यस्य गङ्गदासस्य प्रतापदेव्या समहिषीकस्य पावागढदुर्गमधिकृत्ययुद्ध वर्णितम्। गङ्गदासस्य विजयम् १४४९ ई० वर्षीयमधिकृत्य १४५० ई० वर्षेऽस्य रचना कृता स्यादिति प्रतीयते। चम्पानगरस्य महाकालीमण्डपेऽस्य प्रथमोऽभिनय प्रयोजित ।

अत्र कथानुसारेण मुहम्मदो गङ्गदास तस्य कन्यामयाचत। याञ्चामपमान मत्वासौ युद्धाय कृतसङ्कल्पो निष्ठुरमुत्तर प्रेषितवान्। पुरोधसो विजयाय महाकालीमपूजयन्। राजा कालीमस्तौत्। स तया दत्त प्रमादरूप हार प्राप्तवान्। महानवमीपूजनावसरे राजा विदूषकेण सह सभामण्डपे सगीतकेन प्रसादित । अथ तावदेव बहुरूपो नाट्यकार समागत्य राजानमात्मपरिचयमवदत्—

"कर्णाटदेश्योऽस्मि। राज्ञा मल्लिकार्जुनो विजयनगरं शास्ति। स च स्वपितृरिपुद्वय दाक्षिणात्य सुलतान गजपतिमोड्राधीशं चाजयत्। एकदासौ परिषद गतो गङ्गाधरस्य कवेर्विषये क्वासौ गत इति पृष्टवान्। पारिषदास्त य्यवेदयन्—अत्र स्मात लब्ध्वासौ दिग्विजयकाम गुर्जरेषु सुलतानसविधे षण्मासानुषित्वा सम्प्रति पावाचलनृपतिं गङ्गदासमाश्रयति। तेज गगदास-चरित नाटकमपितम्। तदेव नाटकमभिनेतुमहमत्रोपस्थित" इति।

गङ्गदासस्य यौवराज्यादारभ्य कथा प्रसरति—

"युवराजो राजकुमारीमश्वमारोह्यापहरति। एकत्र विश्राम्यन्नसौ प्रेयसीमाह—

स्वदेकमनसो मुग्धे न मे स्फुरति किञ्चन।
चिदानन्द कला तत्त्वभाविनो योगिनो यथा॥ २ १६

इति नाट्यकारेण रटित पाठं रटन् विनोदशुको महिषी उत्कयति स्म राजान्यामिच्छतीति।

"यो मामनामन्त्र्य किमपि न करोति सोऽप्यायपुत्र कर्णाटनाट्यकारेण बहुरूप कृत्वा चित्तस्थितप्रवृत्तिरूपाभिनय दृष्ट्वा तामेव चिन्तयति।" इति निभृत श्रुत्वा राजा ता प्रसादयामास।

अथ रणचङ्गेन नाम वीरेण सुरत्तानस्य सेनाधिपे नरोजे हते, मुनीरस्य सेनाया अश्वारोहिणां पञ्चसहस्र्यां क्षयं गमितायां वीरमभूपो नानभूपश्च गङ्गदासाय पत्रे प्रेपयतः—मुहम्मदाय स्वकन्या दत्त्वाधीनोभवेति। तौ च प्रागेव तस्मै कन्या दत्तवन्तौ। गङ्गदासः पत्रमुत्तरयति स्म—

म्लेच्छाय कन्यां ददतो स्वस्य जीवनहेतवे।
नान-वीरमयोः कस्य सम्पर्को नोपजायते॥ ५.२

इति वाचयित्वा सुरत्तानः नानवीरमयोरपमानं स्वशिरसि दत्तं पादं मन्वानः सेनया पावाचलदुर्गमाक्रामति।

पराभवपथेऽपि वीरमो गङ्गदासं सन्दिशति स्म—

मुञ्चाभिमानं सकलं यथान्ये पृथिवीभुजः।
दत्त्वा निजसुतां मह्यं राज्यं कुरु निरामयम्॥ ८.१२

इति श्रुत्वा गङ्गदासः तं प्रत्याह—

समिति मम कृपाणो देवकन्यां ददाति॥ ८.१३

अथ नानभूपं सहायमुपलभ्य दुर्गे कृताक्रमणं सुरत्तानो विवृद्धमनोबलः पुनराह—

रे गङ्गदास ते दुर्गं पातयाम्यद्य सर्वतः॥ ८.१६

गङ्गदासः प्रत्युवाच—

यत् कर्तुं शक्यते तत् कर्तव्यमिति।

अन्ततो गङ्गदासो विजयी बभूव। तदा मुहम्मदस्यापकीर्तिर्वर्णिता। यथा—

एषा काक-वराह-माहिष-समा भृङ्गावली-सोदरा
निर्मेघाम्बर-सन्निभा निज-भया न्यक्कुर्वती कज्जलम्।
मूर्ताभावस्यातामसीव खनिर्नीलानां रत्नानां किं
संग्राम-प्रविभग्न-महमद-सुरत्तानापकीर्तिः स्थिता॥

इदं नाटकं गुर्जरदेशस्य राजनीतिक-सांस्कृतिक-परिचयं पुरस्करोति। तदा तुरुष्कादयः प्रभुतां प्रतन्वाना आसन्। रङ्गे पात्रपरिचयो निवेदकमुखेन नेपथ्याद् दीयते। यथा आगच्छन्तं सचिव हरिदासं निवेदकः सूचयति—

स्फायत्प्रोज्ज्वल-कञ्चुकावृततनुर्मध्यस्य शोणांशुक-
श्चञ्चन्मस्तकवेष्टितेन्दुकलिका-संकाश-चीनाम्बरः।

कसे लेखनिका दधत् तदितरे हैम मषीभाजन
पाणौ पुण्यमतीनृपालसचिव प्रत्येति सतोपवान् ॥ १ ३२

यथा वा पुरोहितागम —

प्रात स्नान पवित्र-गात्र-विलसत्प्रक्षालन प्रोल्लसद्
धोत्र-स्फारित-यज्ञसूत्ररचनो दर्भ-प्रगल्भाङ्गुलि ।
गोपीचन्दन - चर्चितालिक - जितादित्यप्रभामण्डल
कर्णान्दोलित-कुण्डल समयते राज पुरोधा इह ॥ १ ३५

यथा च नाट्यकारप्रवेश प्रस्तूयते—

मुक्ता-कुण्डल मण्डित श्रवणयो कण्ठे च मुक्तावली-
युक्त कङ्कणभूषित करयुगे पङ्क्त्या दधत तोडरौ ।
पुष्पापूरित-पूण-केश-निचय कस्तूरिका-पत्रक—
स्ताम्बूल स्फुरिताधरो नरपति प्रत्येति भूपालवत् ॥ २ ३१

कवि क्वचित् पारसीकशब्दगर्भा पुरातनीं हिन्दीमपि प्रयुञ्जानो दृश्यते । यथा—

अप्को वालम देखता किमु सखीच्छोहि खुदाल्लम्मका
बन्दा तीर कमाण लेकरि करौ हिंदू दिवाना इहीं ।
आया जाय कहाई साल पगडीं पालौं गलीं पागडो
खिस्ताकी करता खुदालम अगे इतौ नहीं अम्हकु ॥ ६ १५

बन्दा तेरा निसन्दा हुउं खउस धरों क्यों करो खोद गन्दा
जो मुझ खं मार तिसखे रउ तह सुणुरे कालिका की दुहाई ।
क्यू खुदालम्मु भूला नहि नहि सुणता बात बन्गोर केरी
काहीं भेज्या हमुनखें हम हय किडंर जगला माहि पेठा ॥ ८ ४

अहमदावादनगरस्य सुलतान - मुहम्मद (१४४३-१४५१ ई०) इति शासकस्य राजसभाप्रीत्यर्थमेतस्य नाटकस्याभिनय आयोजित ।

## शमामृतम्

शमामृतस्य कर्त्ता नेमिनाथो जैनानामितिहासपुरुष नेमिनाथमिह नायक वर्णयति । अस्य समयस्तावत् पञ्चशती शताब्दी निश्चीयते । इदमेकाङ्क रूपकमहिंसाधर्ममुपदिशति ।

उग्रसेनस्य कन्यया राजीमत्या सह नेमिनाथस्यो विवाहो भविष्यतीति

नायकौ पूर्वरागान्दोलितचित्तौ स्तः। सर्वे परस्परेण स्पृहणीयशोभस्य युगलस्य प्रशंसां गायन्ति। विवाहोत्सवे वरयात्रिणां भोजनार्थं वद्धाः पशवः।

अस्मिन् रूपके मानवतां दधतः पशवो नेमिनाथं प्रवोधयन्ति। यथा,

"ततः प्रविशन्ति पशवः। तत्रैको हरिणः

हरिणः—(नेमिमवलोकयन् स्वग्रीवया हरिणीग्रीवां विधाय समयौत्सुक्यं ब्रूते)

मा प्रहर मा प्रहर एतां मम हृदयहारिणीं हरिणीम्।
स्वामिन्नद्य मरणादपि दुस्सहः प्रियतमाविरहः॥
हरिणी एष प्रसन्नवदनः त्रिभुवनस्वामी अकारणबन्धुः।
ततो विज्ञापय हे वल्लभ रक्षायै सर्वजीवानाम्॥

हरिणः (मुखमूर्ध्वीकृत्य)

निर्झरणनीरपानमरण्यतृणभक्षणं च वनवासः।
अस्माकं निरपराधानां जीवितं रक्ष प्रभो।
(इति सर्वे पशवः पूत्कुर्वन्ति)

छायानाटकमिदं सुप्रथितं यतो हि नामात्र पशुभूमिकायां मानवा अभिनयन्ति। लोकधर्मिनाट्यमिदं लोकप्रवृत्तेरनुकरणभूयस्त्वात्।"[1]

---

१. लोकधर्मित्वमधोलिखितसमाचारवृत्तेन प्रमाणितम्।

Teheran Feb 22 (Reuter)—A Gunman who opened fire on a Teheran street found an original way to conceal his position to disguise himself as a donkey according to the newspaper Kayhan. Eyewitnesses said shooting broke out in South Teheran killing one youth but no body could pinpoint the source. "I saw people running. I heard the shooting but I could not see the Gunman. Then I noticed a donkey in the middle of the road. It shook very time a shot was fired."

A small child walked up to the donkey and said the animal was shooting. People rushed to the donkey, discovered a zip in the skin, opened it and found the Gunman.

The Hindustan Times dated, 22 Feb 1979.

## मल्लिकामारुतम्

दशाङ्कस्य प्रकरणस्य मल्लिकामारुतस्य कर्त्तोद्दण्ड केरलेषु पञ्चदश्या शताब्द्या मध्ये प्रादुरभूत् । जमोरिनमानविक्रमस्य समसामयिको लेखको वैष्णव आसीत् ।

अत्र कथानुसारेण विद्याधरचक्रवर्तिचन्द्रवर्ममन्त्रिणो विश्वावसो कन्या मल्लिका महायोगीश्वर्या मन्दाकिन्या मारुतेन कुन्तलराजमन्त्रिणो ब्रह्मदत्तस्य पुत्रेणोद्वढा । एव तयो प्रणयवृत्ति पदं चकार । श्रीलङ्काराजोऽपि मल्लिकामकामयत, ततश्च नायकयो प्रणयपथे प्रत्यूहो जात । किञ्च मारुतस्य मित्र कलकण्ठो विष्णुरातस्य दुहितर रमयन्तिका मल्लिकाया सखीमाकाङ्क्षत् । सिंहलराजेन मुक्तेऽपि हस्तिना आक्रान्ते नायिके नायकाभ्या रक्षिते । श्रीलङ्काराजस्ततो दूतेन मारुत सन्दिदेश—मित्र ते कलकण्ठो मृत इति । तदाकर्ण्य मरणोद्यतं मारुत समेत्य कलकण्ठो ररक्ष ।

अथो रक्षोभिरपहृता मल्लिका विसर्जितवान् मारुतस्तैरपहृतमितो युधि विजित्याजगाम । ततो श्रीलङ्काराजेनापहृता 'मन्दाकिनी' मारुतेनामिलत् । कलकण्ठोऽपि रमयन्तिका गृहीत्वान्यतो जगाम । इत्थं कुसुमपुरे घटनाभिः परिसमाप्यते ।

औत्सुक्य संवर्धयन्त्यो घटना सर्वैचित्र्य योजिता मल्लिकामारुतं विशेषयन्ति । यथा पञ्चमेऽङ्के मल्लिका जन्मान्तरे लिप्सुर्मारुत स्वकण्ठधृतकृपाण मल्लिकायाश्चीत्कारमाकर्ण्य ता व्याघ्नि पतन्ती क्रोडे चकार । तामन्विष्यन्नागतो राक्षसो मारुत ब्रवीति—

त्वामेव कोमल कलेवरमाशुपेष पिष्ट्वा पिबामि मधुर रुधिर यथेष्टमिति ।

तत स्कन्धे निधाय तमेव हरन् राक्षसस्तेन कृतशिरा दिव्यपुरमेव गत इति कल्पनोत्तररामचरितस्य शम्बूकवधमनुहरति । अनेकत्र मन्दाकिनी योगविद्यया प्रकटयत्यघटितघटना ।

पाणिनीये काव्यशास्त्रे च जागरूकशेमुषीक उद्दण्डो नैव तदायामे क्वचिदाद्दण्ड्य भजते । अत्र सानुप्रासा काव्यसरतिविभावयति सगीतलहरीम् यथा—

अमी पुनरुदञ्चिता मधुर-गुञ्जर्दिन्दरा
सुगन्धि मलयानिला मदन-गर्व-गाडिम्बरा ।

अशोक - तरु - ताडन - क्वणित-कामिनी-नूपुरा
हसद्‌बकुल-धूलिकापटलधूसरा वासराः ॥१.२४

क्वचिद् रूपके रूपयति नीरूपं वस्तु कविः। यथा—

सा बाला मम हृदयं तस्मिन्नेव क्षणे प्रविष्टाभूत्।
लावण्यामृतधारा परिपीता नेत्रचुलुकाभ्याम्॥१.१७

क्वचिच्च 'शिव शिव' प्रयोगो हनुमन्नाटकस्य स्मारयति। यथा—

एतानस्याः शिवशिव तनुत्यागबद्धोद्यमायाः
कल्याणाङ्ग्या करुणमधुराञ्छृण्वतो मे विलापान्।
दाक्षिण्येन द्रवति दययोल्लीयते मोहवृत्त्या
ग्लायत्यार्या स्फुटति हृदयं हर्षतः स्फायते च॥६.११

यथा वा—

दूयते शिव शिव यौ सरोजताम्रौ
सैरन्ध्री - करतल - दत्त - लाक्षयापि।
पादौ तौ तिमिरविसंष्ठुले स्थलेऽस्मिन्
संचारं चकितदृशः कथं सहेते॥८.८

इत्यादिषु भावधारा न क्वचित् सातत्यं जहाति। प्रकारे गुणवचनस्य द्वित्वमपि जातु तनोत्येव सौभाग्यम्। यथा—

उत्तुङ्ग - स्तनभर - तान्ततान्त - मध्यं
विश्लिष्यद्‌घन - कच - वान्तवान्त - सूनम्॥
वक्त्राब्ज - भ्रमदलि - भीतभीत - नेत्रं
मुग्धाक्षी मम धुरि मन्दमन्दमेति॥८.२०

एकोक्तयः प्रायेणोपनिबद्धा भावगम्भीरिमाणं मानयन्ति।

तां दुर्लभामपि तपोभिरनल्पतप्तै—
र्जाने तयाप्यभिलषामि कुरङ्गनेत्राम्।
नीहार - भूधर - किरीट - विलासमाली
भागीरथीमिव जनो मलयाचलस्थः॥१.४४

अत्रोपमा भौगोलिकं किमपि तत्त्वं प्रत्यक्षयति भावभूमभूमिम्। यथा वा—

यत् तिर्यग् वलितं यदभ्रुललितं यच्चाञ्चले कूणितं
तत्सर्वं किमु दीर्घयोर्नयनयोर्नैसर्गिको विभ्रमः।

आहोस्विन्मदनुग्रह - व्यसनिनो मारस्य लीलायितं
धिङ् मा येन गतत्रपेण किमपि प्रत्याशया कल्प्यते ॥१४६

एकोनयस्तावद् दीर्घा रङ्गे वैरस्यमेव जनयन्ति । तथापि ता काव्य-रूपेण विनोदयन्ति । यथा—

उपचित - घनरागो राग - कल्पद्रुतत्या
प्रसममखिल - विघ्नध्वान्त - संघस्य वृष्ट्या ।
कमलमिव करेण प्रातरर्को नलिन्या
कुवलयनयनाया किन्तु पाणिं ग्रहीष्ये ॥

लघवो महान्तश्च भावा अहमहमिकामनुबध्नन्त आकाशमरितीव तारका कविवाचि निरन्तरा उद्यन्ति । नासौ तेषामेकतममपि निराशयतीति कवेश्चयन-वैधुर्यमेव प्रकाशयति । अयमेव हेतुर्यत् क्वापि नावश्यका अप्येकोनय आपतन्ति । यथा—

परमाम्बिके प्रणत-वाञ्छित-कल्पवल्लि
सा मल्लिका प्रियतमा यदि दुर्लभा स्यात् ।
अस्तु स्वहस्त-करवाल-विलून कण्ठं
वक्त्रं ममाद्य पदयोस्तव रक्तपद्मम् ॥

उद्दण्डस्य काव्ये आनन्दनिष्यन्द इव रस्यते सुधेव स्वाद्यते हृदयतल्प इव शय्यतेऽक्षय्य इव कश्चिदनुभूयते सारस्वतो निधिः । गीतिप्रकर्षस्तावद् वियोगप्रस्तावेषु हृद्यता वहति । यथा—

उपरि पतति कण्ठे चन्द्रिका श्वेत-वह्नौ
मरुति शिरसि विध्वक् पुष्पधूलीकुसूलम् ।
प्रविशतु मदनाग्नि-प्लुष्ट-शेषं वपुर्मे
परिचलदलिधूम पल्लवाङ्गार-तल्पम् ॥ ८३३

यथा वा स्मृतिव्यभिचार्यङ्गता गतस्य सभोगश्रृङ्गारस्य विप्रलम्भ-विधुरस्य समीहायाताम्—

स्मरामि तव तत् प्रिये जघनभारमन्द गत
सखीवचनकार्मिस्तदपि सस्मित व्रीडितम् ।
चला चलकनीनिका-तरलनोत्तरङ्गं च तद्
विलास-शात-मन्थरं वलितकन्धर वीक्षितम् ॥ ६६

यथा वा पुरूरवसो विलापानुकृतिर्गीतिः —

एतत् तदिन्दुपरिपन्थि महेन्द्रनील—
सौन्दर्य-चौर्य-चतुरैरलकैः सनाथम् ।
आकण्ठमग्नवपुषो हरिणेक्षणाया
हा हन्त पश्य मुखमम्बुनि कम्पमानम् ॥ ८.२

अथवा विरहिणो विलापकलापे प्रकर्षं गते प्रलापवचांसि—

तन्वङ्गि दर्शय तदङ्गज-सार्वभौम—
माङ्गल्यदाम-मधुरं वदनेन्दुबिम्बम् ।
किं नेक्षसे महति सन्तमसे पतन्त—
मन्धंमविष्णु-सकलेन्द्रियमात्मदासम् ॥

विरहावेशे परां कोटिं मदनेन नीते स्वाभाविकतां भजते निर्लज्जता, मज्जति व्यामोहौघे विमृश्यकारिता, घृष्यते विवेकः कातरत्वेन, मालिन्यं याति शालीनता, सभ्यासभ्यसंवादं प्रतिपद्यते वाणी—

हा मज्जीवित-मल्लिके क्व नु गतं दासे मयि प्रेम तत्
त्यक्त्वा मां शरणागतार्तमदये क्व त्वं गतासि स्वयम् ।
पृच्छ त्वं कलकण्ठमुद्भ्रमति मे चेतो धृतिर्ध्वंसते
चूटायामयमञ्जलिर्मधुरया वाचा सकृत् संलप ॥ ८.५

उद्दण्डस्य शृङ्गारिणी वृत्तिर्मन्मथोद्भेदमेदस्विनी कदाचित् परम्परा-कन्थामवधूय परित्यक्तमन्थरालसगतिस्थलथलायमानसर्वाङ्गा रङ्गे ताण्डवं प्रचण्डयन्ती रसिकेभ्यो हासावतारं वितरति । यथा—

"सरसिका—(विलोक्य, संस्कृतमाश्रित्य, स्वगतम्)
प्रिय - पाणि - पल्लव - तलाभिमुद्रितः
सुदृशः स्तनः श्रमकणैः करम्बितः
अनुयाति मङ्गल-कुशेशयोल्लसन्—
मदनाभिषेक-मणिकुम्भ-डम्बरम् ॥ ८.३२
ता जाव अहं लदंदरिदा होमि ।

मल्लिका—(स्वगतम्) हन्द ण क्खु सक्कुणोमि हत्थकमलादो त्थणं अवहरिदुं (कथञ्चिदपहरति) ।

मारुतः—(सविषादम्) हन्त,

> सकृदिव समर्प्य बाले मम हस्ते मदनधमतप्तस्य ।
> अपहरसे कुचकुम्भं तृषितकरादमृतकुम्भमिव ॥"

अस्मा तावदुद्दण्डस्तूद्दण्ड एव यथा वा तथा वा सन्ति ।

## वसुमती-मानविक्रमम्

वसुमतीमानविक्रमस्य सप्ताङ्कस्य नाटकस्य प्रणेता केरलीयो दामोदर-भट्टो मल्लिकामारुतस्य रचयितुरुद्दण्डस्य समसामयिकः पञ्चदश्या शताब्द्या अपरभागे बभूव । प्रस्तावनायामसावात्मानं वर्णयति—

"अस्ति दक्षिणापथे केरलेषु साक्षादशोकपुरेश्वरो नाम भगवान् पिनाकपाणिः ।

> अस्त्यद्रिकन्यापति पादपीठ विचेष्टमानाशय पुण्डरीकः ।
> नारायणाचार्य इति प्रसिद्धि प्राप्तः परां प्राज्ञधियां पुरोगः ॥

तस्य चरणारविन्द युगली गलित-रेणु-परमाणु-पात पूत - चेतसासार सारस्वत-निधिना साक्षादब्धि-समुद्र नायकेनेवानेन बाल्यादेवारभ्य सैवशिवतीं वृत्तिमधिकृत्य परां काष्ठामारोपित अयं कविरसाधारणमहिमैव ।"

इत्येतेनानुमीयते यदस्य दामोदरस्य गुरुर्नारायणाचार्य आसीत् ।

कालीकटे मानविक्रममाश्रित्य स्थितोऽयं द्राविडमुद्दण्ड (मल्लिकामारुतस्य प्रणेतारं) प्रतिद्वन्द्विनं पराजित्य केरलानविजेयान् प्रतिष्ठापयति स्म । जीर्णो भवन्नेष सन्यासेन त्यक्तसन्ध्योपासनादिकर्मा सवृत्तो वदतिस्म—

> हृदाकाशे चिदादित्य सदा भाति निरन्तरम् ।
> उदयास्तमयौ नस्तः कथं सन्ध्यामुपास्महे ॥

अस्य प्रहेलिका अप्येन मूर्धाभिषिक्त कुर्वन्ति । यथा—

> क खे चरति, का रम्या, किं जप्यं, किं च भूषणम् ।
> को वन्द्यः, कीदृशी लङ्का वीरमर्कट कम्पिता ॥

अत्र वि, रमा, स्रक्, कटकम्, पिता=वीरभटकंकम्पितेति समाधानं चतुर्थे पादे दत्तं विद्यते ।

नाट्यकथानुसारेण मानविक्रमो महाराजो मन्त्रिणः कन्यां वसुमतीं स्वप्ने दृष्ट्वा प्रणयासक्तो बभूव । वसुमत्यपि महाराजं प्रति प्रणयाकुला जाता । महिषी तद् विज्ञायात्मघातेकर्मतिमात्मानं कुर्वन्ती कथंकथमपि राज्ञानुनीता जीवितुमुदसहत । अन्ते च वसुमत्या मानविक्रमस्य विवाहः समपद्यत ।

## वृषभानुजा

वृषभानुजाया नाटिकायाश्चतुरङ्किकायाः कर्त्ता मथुरादासः पञ्चदशीं शताब्दीमलंचकार। अयं चोपप्रयागं सुवर्णशेखरमध्युवास।

यथानाम नाटिकायां राधाकृष्णयोः प्रणय-लीला विलसति। कृष्णस्य पाणौ कस्याश्चिच्चित्रं वीक्ष्य वृषभानुजा कुपिता सती परिणामे स्वकीयमेव चित्रं विज्ञाय मानं मुञ्चति। इत्येवं छायानाट्यत्वमिदं विलोक्यते। पेशलप्रणय-केलिमनुहरन्ती शैली सर्वथा वैदर्भीगुणान् दधाति। अत्र गीतगोविन्दस्य प्रभावः परिलक्ष्यते।

## मुरारिविजयम्

पञ्चाङ्कस्य मुरारिविजयनाटकस्य प्रणयनं जीवरामो याज्ञिकः १४८५ ई० वर्षेऽकार्षीत्। श्रीमद्भागवतस्य दशमे स्कन्धे वर्णितः कृष्णस्य गोपीभि-र्विलास एव विषयः।

नृसिंहपुत्रेण विश्वरूपेण कृष्णभट्टेनापि मुरारिविजयं नाटकं रचितम्।

## दानकेलिकौमुदी

दानकेलिकौमुदीति भाणिकाया रचयिता रूपगोस्वामी जन्मना राजवंश्योऽपि कृष्णचैतन्यस्य सम्प्रदाये दीक्षितो भारते वैष्णवसंस्कृतेर्महान् उन्नायकः पंचदशषोडशशताब्द्योर्मध्ये स्वरचनाभिः काव्यप्रभां प्राकाशयत्। तस्याधिकतरा रचनाः षोडशशताब्द्यां विरचिताः। दानकेलिकौमुदी १४९५ ख्रीष्टाब्दे प्रणीतेति निम्नलिखितश्लोकेन प्रमाण्यते—

गते मनुशते शाके चन्द्रस्वरसमन्विते
नन्दीश्वरे निवसता भाणिकेयं विनिर्मिता॥

दानकेलिकौमुदी-पुष्पिका

अस्यां भाणिकायां कृष्णलीलाचित्रणं सविशेषं वर्तते।

——

# उपसहार.

मध्ययुगे सहस्रशो रूपकाणि विरचितानि। तेषु प्रायशो द्विशती यथा-कथंचिन्मुद्रितरूपेण वा प्राप्तांशेन वा नाम्ना वा मम समक्षं वर्तते। एतेषु मध्ययुगीनं भारतीय जीवनं समग्रतो विलसति। भारतीय शिल्प—काव्य-चित्र-मूर्ति वास्तु-सगीतानि, सामाजिकजीवनं—लोकोत्थान-वार्ता-मनोरंजन-राजशास्त्रेतिहासयुद्धादीनि च रूपकेषु दृष्टमेव वर्णितानि। निःसन्दिग्धमेतत्सत्यमेव यन्न सन्ति सर्वाणि रूपकाणि श्रेष्ठानि। न कस्यामपि भाषायां सर्वाणि पुस्तकानि श्रेष्ठानि भवन्ति। किन्तु मध्यमकोटिकानां पुस्तकानामपि किमपि वैशिष्ट्यं भवत्येव, येन तेषां सुरक्षा समीहिता स्यात्।

ज्ञानलवदुर्विदग्धा एवार्धपण्डिता वदन्ति यन्नास्ति मध्ययुगे संस्कृत-साहित्यस्य प्रकर्षः। भारतीया अपि तथा वदन्त कथं न लज्जन्ते? परप्रत्यय-नेयबुद्धीनां कृते तु वयं वैदेशिकस्य कीथमहोदयस्यैकस्यैव रूपकस्य प्रह्लादन-देवविरचितस्य पार्थपराक्रमव्यायोगस्य विषये सम्मतिं तस्यैव शब्देनो-दाहराम —

Prahlādanadeva wrote other works of which some verses are preserved in the anthologies and must have been a man of considerable ability and merit

नैक स कविः तस्य कृतिर्वा पशसामर्हति तत्त्वविदाम्। रामभद्रमुने प्रबुद्धरौहिणेय नाट्यकलादृष्ट्या न केवल भारतीयेषु नाट्येषु, अपि तु विश्वनाट्यसाहित्येऽपि सर्वोत्तमं स्थानमर्हति। तत्राभिनय, कथाप्रपञ्च-कौशलं च रमणीयतमे। भगवदज्जुकीय नाम प्रहसनमद्यापि रसविदां समाजेऽभिनयेन कं न रञ्जयति। यदि नाम साहित्यस्य सर्वाङ्गविलासो लोकचरित्र निर्माणाय स्पृहयेत्तर्हि क्षेमीश्वरस्य चण्डकौशिक, शोलाङ्कस्य विबुधानन्दं, कृष्णमिश्रस्य प्रबोधचन्द्रोदयं, रामचन्द्रस्य सत्यहरिश्चन्द्रं, मेघप्रभाचार्यस्य धर्माभ्युदयं, बालचन्द्रस्य करुणावज्रायुध, वेङ्कटनाथस्य सकल्पसूर्योदयं नेमिनाथस्य शमामृतं च सर्वोत्तमानि रूपकाणि शाश्वतं महिमानं समादं लोकप्रियत्वं च भृशमर्जन्ति।

मध्ययुगे वैदेशिकानां विधर्मिणां च भारतीयसस्कृति विध्वसन प्रवृत्ति वारयितुं लोकजागरणस्यापेक्षासीत्। एतदेव परिप्रेक्ष्य ललित विग्रहराज,

हरकेलिनाटकं, पार्थपराक्रमं, किरातार्जुनीयव्यायोगः, हम्मीरमदमर्दनं, भीमविक्रम-व्यायोगः, गंगादास-प्रतापविलासं च रचयित्वा कविभिः सन्दिष्टा भारताः —

तस्माद्युध्यस्व भारत

अनेन विधिना राष्ट्ररक्षाभियोगस्य कृते या स्फूर्तिर्व्यपेक्षिता, तामेव सम्पूरयितुं कवयः सम्यक् प्रयतन्ते स्म । तत्र युद्धघोषोऽश्रूयत—

एकः करः फलयति स्फटिकाक्षमालां
घोरं धनुस्तदितरश्च बिभर्ति हस्तः ।
धर्मः कठोरकलिकालकदर्थ्यमानः
सत्क्षत्रियस्य शरणं किमिवानुयातः ॥

अथ च सन्दिष्टा महाराजाः —

औदार्यशौर्यरसिकाः सुखयन्तु भूपाः ।

वीरसूरिः यथा नाम वीरं प्रशंसति—

त्रस्तेषु तेषु सुभटेषु विभौ च भग्ने
भग्नासु कीर्तिषु निरीक्ष्य जनं भयार्तम् ।
यो मित्रबान्धववधूजनवारितोऽपि
वल्गत्यरीन् प्रति रसेन स एव वीरः ॥

बहुविधाः सन्ति रूपकाणामभिनवविधा अस्मिन् युगे प्रपञ्चिताः । तथा हि—

छायानाट्यप्रबन्धाः —हनुमन्नाटकं, धर्माभ्युदयं, दूताङ्गदं, उल्लाघराघवं, कमलिनीराजहंसं, रामाभ्युदयं, शमामृतम् ।

प्रतीक-नाटकम् —प्रबोधचन्द्रोदयं, मोहराजपराजयं, संकल्पसूर्योदयम् ।

श्रीगदितम् —धर्माभ्युदयम् ।

प्रेक्षणकम् —उन्मत्तराघवम् ।

समवकारः —समुद्रमथनम् ।

ईहामृगः —रुक्मिणी-हरणम् ।

डिमः —त्रिपुरदाहम् ।

नैतेषां नाट्यरूपाणां प्राचीननाट्यसाहित्यपुञ्जे दर्शनं भवति। यदि नामाज्ञानवशान्मध्ययुगस्यैतानि रूपकाणि न समाद्रियन्ते तर्हि कलात्मकविलासस्य कस्माच्चिदनन्यस्मात् प्रातिभोन्मेषाद् वञ्चिता एवात्मवञ्चका वयम्।

मध्ययुगीन भारतीयेतिहास-संरचनायां संस्कृतसाहित्यिककृतीनां सातिशयमुपयोगो वर्तते। तत्रैतिहासिकनाटकानामवतारणा समृद्धैव। तेषु कौमुदीमहोत्सव, विद्धशालभञ्जिका, कर्णसुन्दरी, ललितविग्रहराज, हम्मीरमदमर्दन, शङ्खपराभव, प्रतापरुद्रकल्याण, गङ्गादास प्रतापविलास, वसुमती मानविक्रम च सविशेषमुल्लेखार्हा सन्ति।

जैनसंस्कृतैर्नाटकानि मध्ययुगीनं साहित्यं प्रकामं शबलयन्ति। बहवस्ते सन्ति जैनकवयो येषां नाट्यकृतयः संस्कृतं साहित्यं सुसमृद्धं विदधति।

कश्मीराणां न्यायमञ्जरीकृता जयन्तभट्टेनागमडम्बरेणास्मिन्युगे तद्देशस्य नाट्यरचनानुपलब्धिर्व्याहन्यते। इयं नाट्यकृतिः काचिदपूर्वमिव सांस्कृतिकसमृद्धिं समक्षयति।

मध्ययुगस्य नाट्यसाहित्येन भारतवर्षस्य प्रादेशिकभाषासु विलिखितं साहित्यं विशेषतो नाटकादीनि सम्यक् प्रभावितानि। अनुसन्धानदिशाया संस्कृत-नाटकानां महत्त्वं तत्र विलसत्येव।

संस्कृतनिधिरक्षकाणां भारतीयानां गौरवसंवर्धनायैव मध्यकालिकनाटकोपसेवनमिति निश्चप्रचम्।

---

## प्रथमं परिशिष्टम्

# प्राप्तांश-रूपकाणि

| रूपकनाम | कोटिः | लेखकनाम | अंशदाता ग्रन्थः |
|---|---|---|---|
| अनङ्गसेना-हरिनन्दि | प्रकरण | शुक्तिवास कुमार | नाट्यदर्पण |
| अभिज्ञान-जानकी | नाटक | | वक्रोक्तिजीवित |
| अभिनवराघव | नाटक | क्षीरस्वामी भट्टेन्दुराज | ना०द०, र० सु० |
| अभिसारिका-वञ्चितक | | विशाखदेव | अभिनवभारती, शृ०प्र० भाव प्रकाशन |
| आनन्दकोश | प्रहसन | | रसार्णवसुधाकर |
| इन्दुलेखा | नाटिका | | शृंगार-प्रकाश, ना० द० नाट्यदर्पण |
| इन्दुलेखा | वीथी | | भावप्रकाशन |
| उदयन-चरित | प्रकरण | | दशरूपकावलोक, साहित्यदर्पण |
| उदात्तराघव | नाटक | मायुराज | वक्रोक्तिजीवित, नाट्य-दर्पण, दशरूपकावलोक; शृंगार प्रकाश, सरस्वती कण्ठाभरण, सा० द०, |
| कनकजानकी | | क्षेमेन्द्र | सरस्वतीकण्ठाभरण |
| करुणाकन्दल | अङ्क | भारद्वाज | रसार्णवसुधाकर |
| कलावती | | | ना० ल० र० को० |
| कामदत्तापूर्ति | | | ना० ल० र० को० |
| कीचकभीम | नाटक | | ना० ल० र० को० |

| | | |
|---|---|---|
| गंगातरंगिका | पारिजातलता | भावप्रकाशन |
| गंगाभगीरथ | उत्सृष्टिकाङ्क | भावप्रकाशन |
| गौडविजय | काव्य | भा० प्र० |
| ग्रामेयी | नाटिका | ना० ल० र० को० |
| जामदग्न्यजय | व्यायोग | दशरूपक |
| तरङ्गदत्त | प्रकरण | दश० अव०, भा० प्र० |
| | | शृ० प्र० |
| त्रिपुरदाह | डिम | ना० शा० |
| तारकोद्धरण | डिम | भावप्रकाशन |
| त्रिपुरमर्दन | प्रेक्षणक | भावप्र० |
| देवीपरिणय | नाटक | भावप्रकाशन |
| देवीमहादेव | उल्लाप्यक | ना० ल० र० को० |
| | | सा० द० |
| द्रौपदीस्वयंवर | | ना० द० |
| धूर्तचरित | प्रहसन | सा० द० |
| नन्दिमालि | भाण | भावप्रकाशन |
| नर्मवती | नाट्यरासक | भा० द० |
| नलविक्रम | नाटक | भावप्रकाशन |
| नलविजय | नाटक | ना० ल० र० को० |
| नृसिंहविजय | प्रेक्षणक | भावप्रकाशन |
| पत्रलेखा | भाण | ना० ल० र० को० |
| पद्मावती परिणय | प्रकरण | भावप्र० |
| पार्वतीसम्भोग | | र० सु० |
| पुष्पभूषित | प्रकरण | सा० द० |
| प्रतिज्ञाचाणक्य | नाटक भीम | अभि० भा० |
| प्रतिमानिरुद्ध | वीथी | व० जी०, ना० द०, |
| प्रेमाभिराम | रविपति त्रिपुरान्तक | अभि० भा० |

| | | |
|---|---|---|
| विन्दुमती | दुर्मल्लिका | सा० द० |
| भीमविजय | नाटक | ना० ल० र० को० |
| मदनिकाकामुक | रासक | ना० ल० र० को० |
| मदलेखा | त्रोटक | भावप्र० |
| माणिक्यवल्लिका | कल्पवल्ली | भावप्र० |
| माधवीवीथिका | वीथी | रसा० सुधा० |
| मायाकापालिक | सल्लापक | सा० द०, ना० ल० को० |
| मायाकुरंगिका | ईहामृग | र० मु० |
| मायामदालसा | सल्लापक | ना० ल० र० को० |
| मारीचवध | रागकाव्य | अभि० भा० |
| मालविका | वीथी | सा० द० |
| मूलदेवचरित | प्रकरण | अभि० भा० |
| मेनकानाहुष | त्रोटक | ना० ल० र० को० |
| मेनकाहित | रासक | सा० द० |
| यमलार्जुन-वध | गोष्ठी | भावप्रकाशन |
| यादवोदय | काव्य | सा० द० |
| राघवविजय | रागकाव्य | अभि० भा० |
| राजराजेश्वर | नाटक | Aspects of India's History and culture by K. A Nilkanth Shastri. |
| राधावीथी | वीथी | ना० ल० र० को० |
| रामानन्द | श्रीगदित | भावप्रकाशन |
| रामानुज | अङ्क | भावप्रकाशन |
| रेवतीपरिणय | नाटक | ना० ल० र० को० |
| रैवतमदनिका | गोष्ठी | सा० द० |

| | | | |
|---|---|---|---|
| ललितनागर | भाण | | ना० ल० र० को० |
| लीलामधुकर | भाण | | मा० द० |
| वकुलवीथी | वीथी | | भावप्रकाशन, ना० ल० र० को० |
| वालिवध | प्रेक्षणक | | भावप्रकाशन, ना० ल० मा० द० |
| विक्रान्तशूद्रक | | शूद्र | शृ० प्र० |
| विनामवती | नाट्यरासक | | ना० ल० र० को० मा० द० |
| वीणावती | भाणी | | भावप्रकाशन, ना० ल० र० को० |
| वृत्रोद्धरण | डिम | | भावप्रकाशन, ना० ल० र० को० |
| शक्रानन्द | समवकार | | ना० ल० र० को० |
| शर्मिष्ठा-ययाति | अंक | | मा० द० |
| शशिकामदत्त | नाटक | | ना० ल० र० को० |
| शशिविलास | प्रहसन | | ना० ल० र० को० |
| शारदचन्द्रिका | अङ्क | भट्टवाण | भावप्रकाशन |
| शृंगार-तिलक | प्रस्थानक | | ना० ल० र० सा० द० |
| शृंगारमंजरी | भाण | | भावप्रकाशन र० मु० |
| सत्यभामा | गोष्ठी | | ना० ल० र० को० |
| समुद्रदत्तचेष्टित | प्रकरण | | अभि० भा० |
| समुद्रमथन | समवकार | | सा० द० |
| सागरकौमुदी | प्रहसन | | भावप्रकाशन |
| सुग्रीवकेलन | काव्य | | भावप्रकाशन |
| सैरन्ध्रिका | प्रहसन | | भावप्रकाशन |
| स्तम्भितरम्भक | तोटक | | भावप्रकाशन |

## द्वितीयं परिशिष्टम्

## अप्राप्तरूपकाणि

| रूपक नाम | कोटिः | लेखकनाम | निर्देशकग्रन्थः |
| --- | --- | --- | --- |
| अनङ्गवती | नाटिका | | नाट्यदर्पण |
| अमृतमन्थन | समवकार | | नाट्यशास्त्र |
| अमोघराघव | | | रसार्णवसुधाकर |
| उत्कंठितमाधवकाव्य | | | ना० ल० र० कोश |
| उदात्तकुंजर | उल्लोप्यक | | भावप्रकाशन |
| उर्वशीमर्दन | ईहामृग | | ना० ल० र० को० |
| उर्वशी-विप्रलम्भ | नाटक | | भावप्रकाशन |
| उषाहरण | नाटक | | ना० ल० र० को० |
| कनकावतीमाधव | शिल्पक | | ना० ल० र० को०, सा० द० |
| कन्दर्पकेलि | प्रहसन | | सा० द० |
| कलिकेलि | प्रहसन | | भावप्रकाशन |
| कामदत्त | प्रकरण | शूद्रक | पद्मप्राभृतक, र० नु० |
| कामदत्ता | भाणिका | | ना० ल० र० को० सा० द० |
| कामदत्ता | डोम्बी | | भा० प्र० |
| कुन्दशेखरविजय | ईहामृग | | ना० ल० र० को० |
| कुसुमशेखर-विजय | ईहामृग | | भा० प्र०, सा० द० |
| केलिरैवतक | हल्लीस | | ना० ल० र० को०, सा० द० भा० प्र० |
| कौशलिका | नाटिका | भवनुतचूडः | ना० द० |
| क्रीडारसातल | श्रीगदित | | ना० ल० र० को० सा० द० |

| | | | |
|---|---|---|---|
| वृत्यारावण | नाटक | | अभिनवभारती, ना० ल० र० को०, ना० द०, सा० द० |
| गुणमाला | डोम्बिका | | काव्यानुशासन |
| चित्रभारत | नाटक | क्षेमेन्द्र | औ० वि० च० |
| चित्रोत्पलावलम्बितक | प्रकरण | शङ्कुक | ना० द० |
| चूडामणि | डोम्बिका | | अभिनवभारती |
| छलितराम | नाटक | | ना० द०, व० जी०, दश० अव० शृं० प्र० म० क०, सा० द० |
| जानकीराघव | नाटक | | ना० ल० र० को० |
| देवीचन्द्रगुप्त | प्रकरण | विशाखदेव | अभि० भा०, ना० द०, शृं० प्र० ना०ल०र०को० |
| नरकवध | नाटक | | ना० ल० र० को० |
| पद्मावती-परिणय | प्रकरण | | ना०ल० र०को०, र०सु० |
| पाण्डवानन्द | नाटक | | अभि० भ०, दश० अव० ना० द०, |
| पार्थ-विजय | नाटक | त्रिलोचन | शृं० प्र० ना० द० |
| पुष्पदूषितक | प्रकरण | ब्रह्मयश स्वामी, | सा० द० ना० द० अभिनवभारती, व०जी० |
| पुष्पमाला | | चन्द्रशेखर | सा० द० |
| पुल्लमक रूपक | | | शृं० प्र० |
| प्रद्युम्नाभ्युदय | नाटक | | अभि० भा० |
| प्रभावती | नाटिका | विश्वनाथ | सा० द० |
| प्रयोगाभ्युदय | प्रकरण | | ना० द० |
| प्रहसन | प्रहसन | | रसार्णवसुधाकर |
| वालिका वंचितक | नाटक | विशाखदेवी | ना० द० |
| मदनमंजुला | नाटक | | ना० ल० र० को० |
| मनोरमावत्सराज | नाटक | भीमट | ना० द० |

| | | | र० सु० |
|---|---|---|---|
| महेश्वरानन्द | नाटक | | ना० द० |
| मायापुष्पक | नाटक | | ना० ल० र० को० |
| मारीचवंचितक | नाटक | | शृं० प्र० |
| मुकुटताडितक | नाटक | | सा० द० |
| ययाति-विजय | नाटक | रामचन्द्र | ना० द० |
| यादवाभ्युदय | नाटक | रामचन्द्र | ना० द० |
| रघुविलास | नाटक | | ना० ल० र० को० |
| रम्भानलकूवर | त्रोटक | रामचन्द्र | ना० द० |
| राघवाभ्युदय | नाटक | क्षीरस्वामी | ना० ल० र० को० |
| राघवाभ्युदय | नाटक | | सा० द० |
| | | | अभि० भा० |
| रामचरित | नाटक | भेज्जल | अभि० भा० |
| राधाविप्रलम्भ | रामकाङ्क | | ना० ल० र० को० |
| रामविक्रम | नाटक | | काव्यमीमांसा, शृं० प्र० |
| रामानन्द | नाटक | यशोवर्मा | ना० द०, शृं० प्र० |
| रामाभ्युदय | नाटक | रामचन्द्र | ना० द० |
| रोहिणीमृगाङ्क | प्रकरण | क्षेमेन्द्र | औ० वि० च० |
| ललितरत्नमाला | नाटिका | क्षेमेन्द्र | औ० वि० च० |
| लावण्यवती | काव्य | | अभि० भा० |
| वत्सराजचरित | नाटक | रामचन्द्र | ना० द० |
| वनमाला | नाटिका | सुबन्धु | अभि० भा० |
| वासवदत्तानाट्यधार | नाट्यधार | | अभि० भा० |
| विकटनितम्बा | प्रहसन | | शृं० प्र० |
| विक्रान्तशूद्रक | नाटक | | ना० द० |
| विधिविलसित | नाटक | | ना० द० |
| विलक्षदुर्योधन | नाटक | | र० सु० |
| वीरभद्रविजृम्भण | डिम | | र० सु० |
| वीरानन्द | नाटक | | ना० ल० र० को० |
| शर्मिष्ठापरिणय | नाटक | | |

## पुस्तक नाम-सक्षेप

| | | | | | |
|---|---|---|---|---|---|
| ना० शा० | = नाट्यशास्त्र | ३०० खीष्टाब्द-पूर्वत | | ३०० | खीष्टाब्द यावत् |
| व० जी० | = वक्रोक्तिजीवित | ८५० | ,, | | |
| अभि० भा० | = अभिनवभारती | ९८० | ,, | १०३० | ,, |
| दश० अव० | = दशरूपक-अवलोक | ९७५ | ,, | १००० | ,, |
| शृ० प्र० | = शृङ्गारप्रकाश | १००५ | ,, | १०५४ | ,, |
| स० क० | = सरस्वतीकण्ठाभरण | १००५ | ,, | १०५४ | ,, |
| औ०वि० च० | = औचित्य विचारचर्चा | १०५० | | | |
| ना० द० | = नाट्यदर्पण | १०९३ | , | ११७३ | ,, |
| भा० प्र० | = भावप्रकाशन | ११७५ | ,, | १२५० | ,, |
| प्र०रु०य०भू० | = प्रतापरुद्रयशोभूषण | १२७५ | ,, | १३२५ | ,, |
| सा० द० | = साहित्यदर्पण | १३०० | ,, | १३४० | ,, |
| र० सु० | = रसार्णवसुधाकर | १३४० | ,, | १३६० | ,, |
| ना० च० | = नाटकचन्द्रिका | १४०० | ,, | १५५४ | ,, |



# नाटकानां प्रकाशनादि-विवरणम्

| नाटकनाम | प्रकाशक प्राप्तिस्थानादि |
|---|---|

अञ्जना पवनञ्जयम्— माणिकचन्द्रदिगम्बरजैन ग्रन्थमालाया मुम्बईत १९५० ख्रीष्टाब्दे प्रकाशितम् ।

अनर्घराघवम्—विद्याभवन संस्कृतग्रन्थमालाया काशीत प्रकाशितम् ।

अागमडम्बरम्—अनन्तलाल ठाकुरेण प्रकाशितम् । काश्या चौखम्भा विद्याभवनत प्राप्यम् ।

आश्चर्य चूडामणि —विद्याभवन-संस्कृतग्रन्थमालाया काशीत प्रकाशितम् ।

उन्मत्तराघवम्—(विरूपाक्षकृतम्) अड्यार लाइब्रेरी-मद्रासत प्रकाशितम् (भास्करकविकृतम्) ।

उन्मत्तराघवम्—काव्यमाला – १६ तमे प्रकाशितम् ।

उल्लाघराघवम्—गायकवाड ओ० सीरीज बडोदात प्रकाशितम् ।

कनकलेखाकल्याणम्— चौखम्भाविद्याभवनत १९६० ख्रीष्टाब्दे प्रकाशितम् ।

कमलिनीराजहंसम्—त्रिवेन्द्रम् नगरे १९४१ ख्रीष्टाब्दे प्रकाशितम् । उज्जयिन्या विक्रमकीर्तिमन्दिरे लभ्यम् ।

करुणावज्रायुधम्—जैनात्मानन्दसभात ५६ संख्याक प्रकाशितम् ।

कर्णसुन्दरी—काव्यमाला ▪ संख्याक प्रकाशनम् ।

कर्पूरचरित भाण —गायकवाड ओ० सी० बडोदानगरे प्रकाशितम् ।

कर्पूरमञ्जरी—१९३९ ख्रीष्टाब्दे कलकत्ता-विश्वविद्यालयेन प्रकाशितम् ।

कल्याण-सौगन्धिकम्—(१) मेहरचन्दलच्छमनदास, लाहौर Bulletin of the School of Oriental and African Studies, London III PP. 33-50 प्रकाशितम्, चिरजीव-पुस्तकालये, आगरा-नगरे लभ्यम् ।

किरातार्जुनीय-व्यायोग —गायकवाड ओ० सी० बडोदानगरे प्रकाशितम् ।

कादम्बरीकल्याणम्—मद्रास-नगरीत १९३६ ख्रीष्टाब्दे प्रकाशितम् ।

कुवलयावली

कौमुदी महोत्सवम्—१९२९ ख्रीष्टाब्दे मद्रासत । २००८ संवत्सरे प्रयागत । भारती भवनपुस्तकालये प्रयागे लभ्यम् ।

कौमुदी-मित्रानन्दम्—जैन आत्मानन्दसभा भावनगरतः प्रकाशितम्। बम्बई-नगरस्थभारतीयविद्याभवने लभ्यम्।

गङ्गादासप्रतापविलासम्—गायकवाड-ओ० सी० १९७३ ख्रीष्टाब्दे प्रकाशितम्।

गोरक्षनाटकम्—काव्यमालायां मुम्बईत.

चण्डकौशिकम्—बङ्गाल एशियाटिक सोसाइटीतः १९६२ ख्रीष्टाब्दे प्रकाशितम्। विद्याभवन-संस्कृत ग्रन्थमालातः काश्यां प्रकाशितम् १९६५ ख्रीष्टाब्दे।

चन्द्रकला—प्रयागस्थ-देवभाषा प्रकाशनेन २०२३ विक्रमसंवत्सरे प्रकाशितम्।

चन्द्रलेखाविजयप्रकरणम्—अप्रकाशितमेव हस्तलिखित ग्रन्थागारे जैसलमेरे वर्तते।

ज्योतिः प्रभाकल्याणम्—बंगलौरनगरे १८८३-८४ ख्रीष्टाब्दे काव्याम्बुधि-पत्रिकायामधप्रायं प्रकाशितम्।

तपती-संवरणम्—त्रिवेन्द्रम् सीरीज ११ प्रकाशितम् प्रयाग-विश्वविद्यालय-पुस्तकालये लभ्यम्।

तापसवत्सराजम्—साहित्य-भण्डार-मेरठतः १९६८ ख्री० प्रकाशितम्।

त्रिपुरदाहम्—गायकवाड ओ० सी० वड़ोदातः प्रकाशितम्।

दानकेलिकौमुदी—अप्रकाशिता। लेखकसविधे वर्तते।

दूताङ्गदम्—काव्यमालायां प्रकाशितम्।

द्रौपदी-स्वयंवरम्—जैनात्मानन्द-सभा-भावनगरतः १९१८ ख्रीष्टाब्दे प्रकाशितम्।

धनञ्जय-विजयम्—काव्यमालायां ५४ तमे प्रकाशितम्। कलिकाताया जीवानन्दविद्यासागरेणापि प्रकाशितम्।

धर्माभ्युदयम्—आत्मानन्दसभा, भावनगरतः प्रकाशितम्। चिरंजीव पुस्तकालये आगरानगरे लभ्यम्।

धूर्तसमागमम्—Anthologia Sanscritica इति पत्रिकायां प्रकाशितम्।

नरकासुर-विजयम्—हैदराबादस्थोस्मानिया विश्वविद्यालयतः १९६१ वर्षे प्रकाशितम्।

नलविलासम्—गायकवाड ओरिएण्टल-सीरीज वड़ोदातः प्रकाशितम्।

नारायणी-विलासम्—मद्रासनगरे शा० हस्तलिखित ग्रन्थागारे।

निर्भयभीमम्—यशोविजयग्रन्थमालायां १९ वाराणसीतः प्रकाशितम्।

नैषधानन्दम्—हस्तलिखितम्। Peterson's Report 3. 340 ff.

पाण्डवाभ्युदयम्—लन्दननगरस्थेण्डियाफिसे ४१८७ सख्याकं हस्तलिखितं वर्तते।

पारिजात मञ्जरी—१९६३ ख्रीष्टाब्दे भोपालत प्रकाशिता।

पारिजात हरणम्—साहित्य प्रकाशने दिल्लीत १९६० ख्रीष्टाब्दे प्रकाशितम्।

पार्थपराक्रमम्—गायकवाड ओरियण्टल सीरीजे १९१७ ख्रीष्टाब्दे प्रकाशितम्। गंगानाथझाविद्यानुसन्धान संस्थाने प्रयागनगरे लभ्यम्।

पार्वती-परिणयम्—श्रीरंग-कुम्भकोणत प्रकाशितम्। मुम्बईत काव्यमालायाम्।

प्रतापरुद्र-कल्याणम्—त्रिवेन्द्रम सस्कृत सीरीजे प्रकाशितम्।

प्रद्युम्नाभ्युदयम्—त्रिवेन्द्रम्-सस्कृत-सीरीजे प्रकाशितम्। वाराणस्या सस्कृत विश्वविद्यालयस्य पुस्तकालये लभ्यम्।

प्रबुद्धरौहिणेयम्—आत्मानन्दसभा, भावनगरत प्रकाशितम्। चिरजीवपुस्तकालये आगरा नगरे लभ्यम्।

प्रबोधचन्द्रोदयम्—विद्याभवन-संस्कृतग्रन्थमालाया काशीत।

प्रसन्नराघवम्—काव्यमालायाम्। विद्याभवन-संस्कृतग्रन्थमालाया काशीत प्रकाशितम्।

बाणासुर विजयम्—तञ्जौरस्य सरस्वती-महल हस्तलिखित-ग्रन्थागारे ५२२३ सख्याकं लभ्यम्।

बालभारतम्—काव्यमालाया कर्पूरमञ्जर्या सह प्रकाशितम्।

बालरामायणम्—जीवानन्दविद्यासागरेण, कलिकाताया प्रकाशितम्।

भगवदज्जुकीयम्—मगलोदयम् प्रेस त्रिचूरत प्रकाशितम्।

भीमविक्रम व्यायोग—गायकवाड-ओ० सी० १५१ तमे प्रकाशित।

भैरवानन्दम्—१९७३ ख्रीष्टाब्दे पीयूष प्रकाशनेन प्रयागे मुद्रितम्।

मल्लिकामकरन्दम्—१९७८-१९७९ ख्रीष्टाब्दे सम्बोधिपत्रिकाया अहमदाबादनगरे प्रकाशितम्।

मल्लिकामारुतम्—जीवानन्दविद्यासागरेण कलिकाताया १८८० वर्षे प्रकाशितम्। सारस्वतविश्वविद्यालय पुस्तकालये लभ्यम्।

मुरारि-विजयम्—हस्तलिखित कलिकाताया शा० सस्कृत-महाविद्यालये वर्तते।

मैथिली-कल्याणम्—माणिकचन्द-दिगम्बरजैन-ग्रन्थमाला १९७३ ख्रीष्टाब्दे प्रकाशितम्।

मोहराजपराजयम्—गायकवाड-ओरियण्टल-सीरीजे बडोदात प्रकाशितं संस्कृतविश्वविद्यालयस्य पुस्तकालये लभ्यम्।

रम्भामञ्जरी—काश्या पार्श्वनाथानुसन्धानकेन्द्रे लभ्या। १८८९ ख्रीष्टाब्दे निर्णयसागर-प्रेस-मुम्बईत प्रकाशिता।

रामाभ्युदयम्—लन्दननगरस्थेण्डियाफिसे ४१८७ संख्याकं हस्तलिखितम्।
रुक्मिणी-हरणम्—गायकवाड ओ० सी० वड़ोदानगरे प्रकाशितम्।
लटकमेलकम्—संस्कृत-ग्रन्थमालायां, चौखम्माविद्याभवनतः काश्यां प्रकाशितम्।
ललितविग्रहराजम्—इण्डियन ऐण्टिक्वेरी वर्ष २० तमे प्रकाशितम्।
वसुमती-मानविक्रमम्—अप्रकाशितमेव कोझिकोटनगरस्थकुट्टच्चेट्टन सविधे, त्रिचूरे च नारायणपिशरोटी सविधे वर्तते।
विक्रान्त-कौरवम्—माणिकचन्द दिगम्बरजैन ग्रन्थमाला, बम्बई १६७२।
विजयश्रीनाटिका—टी० टी० नगर भोपालतः प्रकाशितम्।
विटनिद्राभाणः—मद्रासनगरे ३७५५ संख्याकं शासकीय हस्तलिखित ग्रन्थागारे लभ्यम्।
विद्धशालभञ्जिका—विद्याभवन-संस्कृतग्रन्थमालायां काशीतः प्रकाशिता।
विबुधानन्दम्—चउपन्न महापुरुषचरिये काशीतः प्रकाशितम्। हरियाना बुकडिपो, रेलवेरोड, रोहतकात् १६५५ ख्रीष्टाब्दे प्रकाशितम्। पार्श्वनाथ-विद्यालय-रिसर्च-इंस्टिट्यूटे लभ्यम्।
वीणावासवदत्तम्—कुप्पूस्वामीशास्त्रीरिसर्च-संस्थान-मद्रासतः १६६२ ख्रीष्टाब्दे प्रकाशितम्।
वृषभानुजा नाटिका—काव्यमालायां ४६ संख्या प्रकाशिता।
शङ्खपराभवम्—गायकवाड ओ० सी० प्रकाशनम्।
शमामृत—जैनात्मानन्द-सभा-भावनगरतो मुनिधर्मविजयेन प्रकाशितम्।
शृङ्गारभूषणम्—मुम्बईतः काव्यमालायां ५८ संख्याकं १८८६ ख्रीष्टाब्दे प्रकाशितम्।
सङ्कल्पसूर्योदयम्—अडयार लाइब्रेरी, मद्रास।
सत्यहरिश्चन्द्रम्—काव्यमालायां
समुद्रमथनम्—गायकवाड ओ० सी० वड़ोदातः प्रकाशितम्।
सुभद्रानाटिका—माणिकचन्ददिगम्बरजैनग्रन्थमालायां १६५० ख्रीष्टाब्दे प्रकाशिता।
सुभद्राधनञ्जयम्—त्रिवेन्द्र-संस्कृत-सीरीज १३ प्रकाशितम्। प्रयाग-विश्वविद्यालय-पुस्तकालये लभ्यम्।
सुभद्रा-परिणयनम्—सरस्वती भवन-टेक्स्ट ७७ काश्यां प्रकाशितम्।
सोमवल्लीयोगानन्दम्—Triennial Cat of Skt. Mss. in Oriental Library Madras II 2276।
सौगन्धिकाहरणम्—विद्याभवन-संस्कृतग्रन्थमालायां काशीतः प्रकाशितम्।
हनुमन्नाटकम्—चौखम्भा सीरीज, वाराणसी।
हम्मीरमद-मर्दनम्—गायकवाड-ओ० सी० वड़ोदातः १० संख्याकं प्रकाशितम्। संस्कृतविश्वविद्यालयस्य पुस्तकालये काश्यां प्राप्यम्।
हास्यचूडामणिः—गायकवाड-ओ० सी० वड़ोदातः प्रकाशितः।

———

# शब्दानुक्रमणिका

—०—